


**A BRIGHT NEW TRADITION IS BUILT by THE READERS OF**

# THE HERITAGE

FEATURES AND FICTION FOR TODAY AND TOMORROW



The span of one and half years is not a long time, yet given will and goodwill, enough of a time to build a healthy, meaningful and intelligent reading tradition.

SLOWLY BUT STEADILY THE ELITE OF INDIA AND MANY LOVERS OF INDIAN CULTURE ABROAD ARE UNITING IN THE HERITAGE.

* THE HERITAGE reveals the fourth dimension of life to you—through series like *"The Other Experience"* and *"Fables and Fantasies for Adults"*.
* THE HERITAGE brings to you the best of creative literature of Contemporary India—stories, novels and poems.
* THE HERITAGE features pictorial articles on places and monuments delving into their *roots*.
* THE HERITAGE takes you to a tour of the *Little-Known India*.



# पर्यायपदेषु कः स्वीकरणीयः?

शिष्यः – श्रीमन्! भवता सरलसंस्कृतदृष्ट्या परिमितीकरणम् (Limiting the words) अङ्गीक्रियते किल। एवं तर्हि पर्यायपदानां विषये का धारणा?

आचार्यः – पर्यायपदेषु कश्चन एकः एव शब्दः अङ्गीक्रियते। सामान्यतः अकारान्तः शब्दः प्रयोगसुलभः। अतः पर्यायपदेषु अकारान्तः शब्दः प्रसिद्धः यदि कोऽपि अस्ति तर्हि सः स्वीकरणीयः। अत्र अकारान्तः नाम–अकारान्तपुल्लिङ्गः (यथा- वृक्षः, देवः .... इ) आकारान्त-स्त्रीलिङ्गः (यथा– शाला, माला, लता .... इ) अकारान्त-नपुंसकलिङ्गः (यथा- ज्ञानम्, कार्यम् .... इ) च शब्दः।

शि – इदानीं देवतापर्यायत्वेन अमर-निर्जर-विबुध-सुर-प्रभृतयः बहवः शब्दाः सन्ति। ते सर्वे अकारान्ताः एव। अत्र कः शब्दः स्वीकरणीयः?

आ – देवः इति शब्दः प्रान्तीयभाषासु रूढः। श्रवणमात्रेण तस्य अर्थः अवबुध्यते। अतः सः एव शब्दः स्वीकरणीयः।

शि – 'देवता' इति आकारान्तः शब्दः अपि प्रसिद्धः अस्ति किल?

आ – तथापि देवशब्दस्वीकारे एव सौलभ्यं किल? आकारान्तशब्दस्य विभिन्नविभक्तिषु प्रयोगः क्लिष्टः। सामान्यतः भ्रमेण तस्य विशेषणम् अपि पुल्लिङ्गे कदाचित् योजयन्ति।
यथा- 'ते देवताः .... उक्तवन्तः' इत्यादयः।
अतः देवशब्दस्वीकारः एव अत्र युक्तः।

शि – कस्यचित् अकारान्तः पर्यायशब्दः कोऽपि न भवति। तदा?

आ – तदानीम् प्रयोगसुलभः सुलभगम्यः कोऽपि अन्यः शब्दः स्वीकरणीयः।

शि – कदाचित् अकारान्तः पर्यायशब्दः अप्रसिद्धः तिष्ठति। इकाराद्यन्तः शब्दः प्रसिद्धः भवति, तदा?

आ – तदा प्रसिद्धं शब्दं स्वीकरोतु। सुलभावगतिः प्रधाना किल? स्वीकृतः शब्दः सुलभावगतियोग्यः सन् प्रयोगयोग्यः अपि यदि भवेत् तर्हि वरम्।

शि – एवं तर्हि सुलभावगतेः प्रथमप्राशस्त्यम्। तदनन्तरं प्रयोगसौलभ्यम् अपि मनसि स्थापनीयम्।

आ – आम्। अन्यच्च कृतकता (असहजता वा) यथा न भासेत तथा अपि जागरूकता आश्रयणीया।

शि – एवं तर्हि अनुभवबलस्य आधारेण निर्णयः स्वीकरणीयः।

आ – आम्। पूर्वोक्तक्रमेण **एकस्मिन् अर्थे एकः (एव) शब्दः** इति एकं व्यवहारसूत्रम्। 'बहुषु शब्देषु सत्सु अपि एकस्मिन् अर्थे एकः (एव) शब्दः स्वीकरणीयः' इति तस्य तात्पर्यम्।

अपरं च सूत्रम्- **एकः शब्दः एकस्मिन् अर्थे (एव)** इति।
अस्य तात्पर्यं तु- एकस्य शब्दस्य बहवः अर्थाः भवन्ति। कस्मिंश्चित् एकस्मिन् एव अर्थे तस्य प्रयोगः कृतः चेत् अध्येतॄणां भ्रमस्य न अवकाशः। यथा 'कुतः' इत्यस्य अर्थद्वयम्-कस्मात् प्रदेशात् (From where) किं निमित्तं (why) इति। 'किं निमित्तं' इति अर्थं बोधयितुं शब्दान्तरं 'किमर्थम्' इति अस्ति एव। अतः वयं कुतः इति शब्दस्य प्रयोगं 'कस्मात् प्रदेशात्' इति अर्थे एव कुर्मः।

शि – रमणीयं सूत्रम् एतत्- एकस्मिन् अर्थे एकः (एव) शब्दः।
एकः शब्दः एकस्मिन् अर्थे (एव)।



# चन्दमामा

नवम्बर्-१९८६

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. २-५०

वार्षिकं ग्राहकशुल्कं रू. ३०-००

# चन्दमामा

संस्थापकः- 'चक्रपाणिः' सञ्चालकः- 'नागिरेड्डी'

संस्कृतप्रचारक्षेत्रे अभिप्रायद्वयं पश्यामः वयम्। केचन वदन्ति- 'कालः यथा परिवर्तते तदनुगुणं संस्कृतक्षेत्रे अपि परिवर्तनम् अपेक्षितम्। (परिवर्तनं न हि संस्कृते, अपि तु भाषाप्रचारतन्त्रे, तया भाषया उपस्थाप्यमानेषु विषयेषु च) अन्यथा संस्कृतं कालबाह्यं तिष्ठेत्'' इति।

'संस्कृतं चिरनूतनम्। तस्य माहात्म्यं सदा अस्ति स्थास्यति च। एतेन आकृष्टाः जनाः स्वयम् एतस्य समीपम् आगच्छन्ति। अतः किमपि परिवर्तनं न अपेक्षितम्' इति अपरे दृढं प्रतिपादयन्ति।

वयं यदि लोकं परिशीलयामः तर्हि स्वयं युक्तायुक्ततां निर्णेतुं प्रभवामः। 'संस्कृतं श्रेष्ठं, किन्तु जनाः तत्र स्वयं न तथा प्रवर्तन्ते' इति हि कटुसत्यम्। 'यदि वयम् आसक्तिम् उत्पादयेम तर्हि स्वयम् अग्रे आगच्छन्ति' इति तु अनुभवसिद्धम्।

एवं ज्ञात्वा अपि यदि वयं मौनं तिष्ठेम तर्हि पापभागिनः भवेम। संस्कृतमाता अस्मान् निन्देत्। कालानुगुणं परिवर्तनं प्रकृतेः स्वभावः।

क्रियाशीलता हि अस्माकं प्रकृतिः। प्राचीनपरिपाटीं संवर्धयेम। नूतनतां स्वागतीकरवाम च। नूतनाः पल्लवाः। प्राचीनानि मूलानि। असदृशी भवेत् खलु वृक्षस्य शोभा!

सम्पुटः - ३ नवम्बर्-८६ सञ्चिका - ८

प्रतिकृतिमूल्यं रू. २-५० * वार्षिकं ग्राहकशुल्कं रू. ३०-००






CHITRA

## रसवार्ता:

### रूपकात् लाभः!



श्याम्यूल् बेकेल्महोदयेन रचितस्य 'वेटिंग् फार् गडाट्' नामकं रूपकं द्रष्टुम् आगतैः प्रेक्षकैः निराशया प्रतिनिवर्तनीयम् आपतितम्। यतः स्वीडिष् कारागारे स्थितानां केषाञ्चित् बन्दिनाम् अभिनयार्थम् अत्र अवकाशः कल्पितः आसीत्। रूपके भागं वोढुम् आगतेषु पञ्चसु बन्दिषु चत्वारः प्रेक्षकमन्दिरस्य वातायनद्वारेण बहिः गत्वा पलायनं कृतवन्तः।

### वयसः गौरवम्!

टेक्सास्नगरे मेस्क्विट् उपाहारमन्दिरे कदाचित् प्रकटितं यत् १० किग्रां भारयुतः लाबुस्टर् नामकः महाकर्कटकः भोजनकूटे परिविष्यते इति। किन्तु शताधिकाः धीवराः स्वकीयं विरोध प्रकटितवन्तः यत् सः लाबुस्टर्कर्कटकः १५४ वर्षेभ्यः,धीवरेभ्यः आत्मानं रक्षन् आसीत्। सः वयसा टेक्सास् शासनापेक्षया ज्येष्ठः, अतः सः न मारणीयः, अपि तु त्यक्तव्यः इति। तेषाम् इच्छानुसारं लाबुस्टर् उन्मुक्तः अभवत्।



### मकरस्य पराजयः!



तांगान्यिकातीरे मुंगाबिया अली नामकः दशवर्षीयः बालकः पशुचारणं कुर्वन् आसीत्। तदा तटाकस्थः मकरः कश्चित् तं पादे अगृह्णात्, जलस्य अन्तः नेतुं प्रयत्नम् अकरोत् च। तदा तेन बालकेन सह स्थिताः इतरे गोपालकाः धैर्येण तम् आक्रष्टुम् आरब्धवन्तः। बहुकालपर्यन्तं परस्परम् आकर्षणं प्रवृत्तम्। अन्ते मकरः पराजयम् अङ्गीकृत्य जलं प्राविशत्।

# कल्याणऋषिः

पूर्वं कदाचित् केचन ऋषयः यज्ञाचरणेन स्वर्गवासयोग्यतां सम्पादितवन्तः आसन्। किन्तु ते स्वर्गं गन्तुं मार्गं न जानन्ति। एतेषु कल्याणः नाम ऋषिः ज्ञानवृद्धः तपोवृद्धः सुविख्यातः च। अतः इतरे ऋषयः तं प्रार्थितवन्तः- 'स्वर्गं गन्तुं भवान् एव मार्गम् उपदिशतु' इति।

कल्याणः स्वर्गमार्गस्य अन्वेषणं कुर्वन् गतवान्। मार्गे अरण्ये ऊर्णायुः नाम गन्धर्वः तेन मिलितवान्। कल्याणः स्वसमस्यां गन्धर्वाय निवेदितवान्। दयालुः गन्धर्वः कल्यणं कञ्चित् मन्त्रम् उपदिष्टवान्। 'स्वर्गवासार्थम् अर्हाः यदि एतं मन्त्रं जपन्ति तर्हि स्वर्गद्वाराणि स्वयम् उद्घाटितानि भवन्ति' इति उक्तवान् च।

कल्याणः सन्तोषेण प्रत्यागत्य ऋषीन् तं मन्त्रम् उपदिष्टवान्।

'एतं मन्त्रं कुतः प्राप्तवान्?' इति पृष्टवन्तः मुनयः। कल्याणः किमपि उत्तरं न दत्तवान्। 'तपसा प्राप्तवान् स्यात् सः' इति चिन्तयित्वा ते मुनयः मौनम् आश्रितवन्तः।

कल्याणम् अनुसरन्तः मन्त्रं जपन्तः च मुनयः स्वर्गद्वारसमीपम् आगतवन्तः। स्वर्गद्वाराणि स्वयम् उद्घाटितानि। कल्याणं विना सर्वे मुनयः अन्तः प्रविष्टवन्तः। स्वर्गद्वाराणि तत्क्षणे पिहितानि अभवन्।

उपकारं कृतवतः गन्धर्वस्य नाम गोपयन् कल्याणः गन्धर्वविषये कृतज्ञताभावं यत् न प्रकटीकृतवान् तेन सः योग्यतावान् अपि स्वर्गं प्रवेष्टुं न शक्तवान्।





# राजलक्षणम्

विक्रमसेनराजः भद्रावतीराज्यं पालयन् आसीत्। तस्य पुत्रद्वयम्। एकः विजयः,अपरः अनन्तः। तौ यमलरूपेण जन्म प्राप्तवन्तौ। विक्रमसेनः पराक्रमशाली, गुणवान् च। तस्य राज्ये कुत्रापि अतृप्तेः वातावरणम् न आसीत्।प्रजाः सुखेन आसन्। अतः प्रजानां महाराजविषये आदरभावना आसीत्।

विक्रमसेनः यथा पराक्रमशाली तथैव धर्मनिष्ठः अपि। स्वशासने कुत्रापि धर्मलोपः यथा न भवेत् तथा जागरूकतया व्यवहरति स्म सः।

यथा राजा तथा प्रजाः किल? राज्ञः धर्मनिष्ठाकारणतः भद्रवती राज्ये अपि धर्मः सम्यक् परिपाल्यमानः आसीत्। अतः राज्ये सर्वत्र सुखसम्पत्तयः शान्तिधर्मादयः च व्याप्ताः आसन्।

मम मरणानन्तरं यः महाराजः भविष्यति सः कीर्तिमान् भवेत् इति चिन्तयन् विक्रमसेनः उत्तमगुरुं नियोज्य पुत्रद्वयम् अपि राजोचिताः विद्याः पाठितवान्।

विजयः चतुरः। धनुर्विद्यां सम्यक् जानाति। सकलशस्त्रेषु पारङ्गतः च। भावावेगेन किमपि कार्यं न करोति। अतीव विनयभावः गम्भीरव्यक्तित्वं च तस्य।

कठिनाः समस्याः उपस्थिताः चेदपि सः न विचलितः भवति, न वा उद्विग्नः भवति। सर्वं शान्ततया परिशील्य युक्तायुक्ततां परामृष्य योग्यं निर्णयं स्वीकरोति। अतः तेन क्रियमाणानि कार्याणि सफलानि एव भवन्ति स्म।

अनन्तः एतद्विरुद्धः। यद्यपि सः चतुरः एव, तथापि लघुविषयम् अपि कदाचित् गम्भीरतया स्वीकरोति। स्वस्य वचनम् अन्ये तिरस्कुर्वन्ति चेत्, अथवा दोषोद्घाटनं कुर्वन्ति चेत् एषः सोढुं न शक्नोति।



पुत्रयोः एतं भेदं विक्रमसेनः जानाति एव। तयोर्मध्ये महाराजः भवितुं कः योग्यः इति चिन्तयन् आसीत् सः। अन्ते सः निश्चितवान् यत् द्वाभ्यां पुत्राभ्याम् अपि एकं वर्षं यावत् पूर्णं राज्यम् अटित्वा आगन्तव्यम्। प्रवाससमये दृष्टाः अनुभवाः वक्तव्याः च इति। महाराजस्य सूचनानुसारं तौ द्वौ अपि पादाभ्याम् एव प्रस्थितौ।

देशे विद्यमानान् ग्रामान् नगराणि च पश्यन्तौ तौ वर्षान्त्ये राज्यसीमायां विद्यमानं वनं प्राप्तवन्तौ। मध्याह्नसमये एकस्य वृक्षस्य अधः विश्रान्तिं स्वीकुर्वन्तौ आस्ताम्।

तावति काले "अहो, कः अस्ति, रक्षतु, रक्षतु" इति कस्याश्चित् स्त्रियः रोदनध्वनिः श्रुतः।

समीपे स्थितस्य कूपस्य अन्तर्भागतः आगतः इव आसीत् सः ध्वनिः।

झटिति तौ द्वौ अपि तस्यां दिशि धावितवन्तौ। एकस्मात् कूपतः रोदनध्वनिः श्रूयते स्म। कूपं परितः लघुसस्यानि आसन् इत्यतः कूपः समीचीनतया न दृश्यते स्म।

राजकुमारौ द्वौ अपि सस्यानि अपसार्य कूपं दृष्टवन्तौ। तयोः ऊहा समीचीना एव आसीत्। काचित् सुन्दरी स्त्री कूपे पतिता आसीत्। सामान्येन वेषभूषणेन एव ज्ञायते स्म यत् सा उत्तमकुलोत्पन्ना इति। सा उपरि आगन्तुं प्रयतमाना असहायतया आक्रन्दनं कृतवती आसीत्। कूपस्य अन्तः विद्यमाना सा तौ पश्यन्ती दीनस्वरेण उक्तवती - "अज्ञात्वा अहम् अत्र पतिता। कृपया मां रक्षतु" इति।

तस्याः अद्भुतं सौन्दर्यं दृष्ट्वा विजयः मोहितः। अनुजः अनन्तः एकां लतां छित्वा लतायाः एकम् अग्रम् अग्रजस्य हस्ते दत्तवान्। अन्यम् अग्रभागं स्वीकृत्य कूपम् अवतीर्णवान्। तस्याः हस्तं गृहीत्वा उपरि आगतवान् च।

विजयः तां दृष्ट्वा पृष्टवान् - "भवती का? एतादृशं निर्जनप्रदेशं किमर्थम् आगतवती ?" इति।

तदा सा उक्तवती-"अहं करवीरपुर-महाराजस्य पुत्री। मम नाम- पल्लवी। सखीभिः सह विहारार्थम् एतत् वनम्

आगतवती। ताभिः सह क्रीडन्ती अहं दूरम् आगता। अज्ञात्वा कूपे पतिता च। मम सख्यः माम् अन्विष्यन्त्यः इदानीम् अत्र आगच्छेयुः'' इति।

तत्क्षणेऽएव सख्यः तत्र आगताः। विजयः अनन्तः च राजकुमार्यै स्वपरिचयं उक्तवन्तौ। 'एषा मया परिणेतव्या' इति विजयस्य इच्छा जाता।

अनन्तस्य अपि तादृशी एव इच्छा जाता। यतः हस्तं गृहीत्वा अहम् एव तां रक्षितवान् इति सः चिन्तयति।

मनसि उत्पन्नां भावनां तत्रैव उक्तवान् अनन्तः। किन्तु विजयः मौनम् आसीत्। पल्लवी किमपि अनुक्त्वा विजयम् एकवारं दृष्ट्वा सखीभिः सह गतवती।

वर्षात्मकं प्रवासं समाप्य तौ राजकुमारौ राजधानीम् आगतवन्तौ। स्वकीयान् अनुभवान् उक्त्वा पल्लवीविषये उत्पन्नाम् इच्छां निवेदितवन्तौ च।

तत् श्रुत्वा आश्चर्यचकितः विक्रमसेनः कुमारौ उक्तवान्- ''करवीरपुरस्य राजकुमारी भवतोर्मध्ये कम् अपि इच्छेत् वा न वा इति न ज्ञातम्। बहुकालतः अस्माकं मित्रराज्यं तत्। राजकुमारीम् अत्र आनाय्य विषयः ज्ञातव्यः'' इति।

एकसप्ताहाभ्यन्तरे एव करवीरपुरं गत्वा महाराजस्य अभिप्रायम् उक्त्वा पल्लवीं तस्याः पितरं च आनीतवान् भद्रावतीराज्यस्य मन्त्री।



अनन्तविजययोः समक्षं मन्त्री पल्लवीं पृष्टवान् – ''एतौ द्वौ राजकुमारौ अपि भवतीं परिणेतुम् इच्छतः। भवती एतयोर्मध्ये यं कमपि परिणेतुम् इच्छति वा ?''इति।

पल्लवी शिरश्चालनपूर्वकम् आम् इति सूचितवती। मन्त्री तस्यै एकां पुष्पमालां दत्तवान्।

तत् दृष्ट्वा अनन्तः मन्दहासेन उक्तवान्-''मन्त्रिन्, राजकुमारी आवयोः मध्ये कं परिणेष्यति इति संशयः एव मास्तु। प्राणापायेन अहं तां रक्षितवान् अस्मि। अतः सा मां विना अन्यं न परिणेष्यति ''इति।

पल्लवी शिरः अवनमय्य मन्दहासपूर्वकम् अग्रे आगत्य पुष्पमालां विजयस्य कण्ठे स्थापितवती।

मन्दस्मितः विजयः मौनम् आसीत्। पल्लवी शिरः उन्नीय अनन्तं पश्यन्ती उक्तवती – "भवतः अग्रजस्य आदेशानु-सारं भवान् मां कूपतः रक्षितवान्। भवतः व्यवहारे लक्ष्मणस्य सहोदरभक्तिः एव मया दृष्टा । सीता यया भावनया लक्ष्मणं दृष्टवती तया एव भावनया अहं भवन्तं पश्यामि । प्रथमदर्शनेन एव भवति सा भावना उत्पन्ना । किन्तु भवतः अग्रजं यदा दृष्टवती तदा एव अहं तेन आकृष्टा । न जाने, किं कारणम् इति । तस्य राजगाम्भीर्यम् अपि अत्र कारणं स्यात् । दैवेन एतत्सर्वं पूर्वम् एव निश्चितम् इति मन्ये" इति ।

अनन्तः शिरः अवनमय्य पल्लवीं नमस्कुर्वन् उक्तवान् – "प्रजावति, भवती सीतालक्ष्मणयोः प्रसङ्गं ज्ञापयित्वा मयि विद्यमानम् अहम्भावम् औध्दत्यं च दूरीकृतवती। अग्रजस्य सहजं राजगाम्भीर्यं दृश्यते, मम व्यवहारे कृतकता च दृश्यते इति तु सत्यम् एव । गुणाः व्यक्तीनां योग्यतां परिचाययन्ति । यद्यपि अहं राजकुले जातः, तथापि मम व्यवहारे राजगाम्भीर्यं न आसीत् इति अद्य अहम् आत्मावलोकनेन ज्ञातवान् । इतःपरं राजकुलोचितं व्यवहारं कर्तुं प्रामाणिकतया प्रयत्नं करोमि । भवती तु मम अवगुणं वचनैः प्रदर्श्य मां जागरितवती । एवम् उपकृतवतीं भवतीम् अहं जन्मनि कदापि न विस्मरामि" इति ।

विक्रमसेनः एतत्सर्वं अवलोकयन् एकं सत्यसङ्गतिं ज्ञातवान् यत् राजा शूरः चेत् अपि मेधावी समर्थः च भवेत्। एते गुणाः विजये एव सन्ति। अन्यच्च विजयः कदापि उद्विग्नः न भवति। बाल्यतः आरभ्य राजगाम्भीर्येण व्यवहरति अपि। अतः एषः एव सिंहासने उपवेशयितव्यः इति।

कालक्रमेण विक्रमसेनः विजयस्य पट्टाभिषेकं कृत्वा पल्लवीराजकुमार्या सह सवैभवं विवाहं कारितवान्।

अनन्तः तु युवराजपदवीम् अलङ्कुर्वन् विनयेन व्यवहरति स्म। राजकार्येषु साहाय्यं कुर्वन्, अग्रजस्य आज्ञां पालयन् च सः सुखेन जीवितवान्।





# नूतनः न्यायाधीशः

पूर्वं विन्ध्यारण्यस्य परिसरे कृषियोग्या भूमिः केषाञ्चित् भूस्वामिनाम् अधीने आसीत्। ते प्रतिवर्षं कररूपेण महाराजाय किञ्चिद्धनं समर्पयन्तः स्वाधीने स्थितानां प्रजानाम् उपरि सर्वाधिकारं प्रदर्शयन्ति स्म। प्रजाः अपि एतत् अङ्गीकृत्य विधेयतया व्यवहरन्ति स्म।

भूस्वामिनः सेवायां केचन सैनिकाः अपि भवन्ति स्म। एषः भूस्वामी एव सेनानायकः मन्त्री च। कदाचित् सः भूस्वामी विद्याविहीनः तिष्ठति। तथापि सः एव तासां प्रजानां गुरुः धर्मबोधकः च।

एतादृशेषु भूस्वामिषु अन्यतमः नागचूडामणिः। कदाचित् एतस्य ग्रामे प्राचीनः न्यायाधीशः दिवंगतः। तदा नागचूडामणेः मनसि विचारः आगतः यत् अहम् एव न्यायाधीशत्वेन व्यवहरिष्यामि इति। तद्दिने एव सः आत्मनः न्यायाधिकारित्वं सडिण्डिमघोषम् उद्घोषितवान्।

तस्मिन् राज्ये न्यायव्यवस्थाएवम् आसीत् यत् सामान्यविवादानां निर्णयं स्थानीयः न्यायाधिकारी करोति स्म। मरणदण्डनस्य इतरमहाशिक्षायाः च विधानं तु महाराजस्य एव।

नागचूडामणिः यदा न्यायाधीशपदव्याम् आसीत् तदा एव देशाटनं कुर्वन् राजा तं ग्रामम् आगतवान्। तत्समये नागचूडामणिः कस्यचित् अपराधिनः विचारणायाम् आसीत्। पार्श्वग्रामस्थाः अपि केचन तत्र आसन्।

ग्रामम् आगतः महाराजः नागचूडामणेः पार्श्वे उन्नतासने उपविष्टवान्। इदानीं न्यायनिर्णये नागचूडामणेः काचित् भीतिः। सम्भ्रान्तः सः इतस्ततः पश्यति।

वादिनः नासिका अर्धं कर्तिता आसीत्।



नागचूडामणिः कम्पमानस्वरेण तं पृष्टवान्- "भोः, पुनः अपि वदतु। सत्यं वदतु। भवतः नासिकायाः किं जातम्?" इति।

तदा सः पार्श्वस्थं प्रदर्शयन् "श्रीमन्! एषः मम नासिकां दष्टवान्" इति उक्तवान्।

"भवान् किमर्थं तस्य नासिकां दष्टवान्?" इति द्वितीयं पृष्टवान् नागचूडामणिः।

"श्रीमन्! सः असत्यं वदति। अहं तस्य नासिकां न दष्टवान् एव। स्वयं नासिकां दष्ट्वा इदानीं मयि अपराधम् आरोपयति सः" इति उक्तवान् द्वितीयः।

"तत् कथं शक्यम्? कोऽपि आत्मनः नासिकां स्वयं दष्टुं शक्नुयात् वा?" इति पृष्टवान् नागचूडामणिः।

तदा द्वितीयः उक्तवान्- "समान्यतः एतत् न शक्यते इति तु सत्यम् एव। किन्तु एषः आसन्दम् आरुह्य प्रयत्नेन एतत् साधितवान्" इति।

अत्रान्तरे नागचूडामणिः स्वपार्श्वे उपविश्य सर्वं परिशीलयन्तं राजानं दृष्टवान्। राज्ञः मुखे असमाधानस्य चिह्नम् आसीत्।

'इतोऽपि कालहरणं कृतं चेत् राजा कुप्येत' इति चिन्तयन् नागचूडामणिः- "आम्, भवता उक्तं सत्यम् एव स्यात्। न्यायाधिकारिणः मम पुरतः एषः असत्यम् उक्तवान्। अतः एतस्मै चत्वारिंशत् कशाप्रहारान् दण्डत्वेन आज्ञापितवान् अस्मि" इति उक्तवान्।

अनन्तरं महाराजम् उद्दिश्य- "प्रभो, भोजनसमयः आसन्नः, भोजनशालां गच्छाम तावत्" इति उक्त्वा आत्मना सह महाराजं भोजनशालां नीतवान्।

भोजनानन्तरं नागचूडामणिः पत्नीं पृष्टवान्- "न्यायनिर्णये मया कोऽपि दोषः आचरितः वा?" इति।

तदा पत्नी असमाधानेन- "दोषः किं, महती मूर्खता आचरिता भवता। आसन्दम् आरुह्य वा कोऽपि स्वनासिकां दष्टुं शक्नुयात् वा? भवान् एव परीक्ष्य पश्यतु" इति उक्तवती।

नागचूडामणिः तथैव आचरितवान्। किन्तु नासिकां स्वयं दष्टुं न शक्तवान्। चिन्तापूर्णस्वरेण सः पत्नीम् पृष्टवान्- "इदानीम् अहं किं करोमि? महाराजः मम

बुद्धिमत्ताविषये किं वा चिन्तयेत्?" इति।

"पुनः एकवारं न्यायविचारणां करोतु। अस्मिन् सन्दर्भे द्वितीयं कशाप्रहारैः दण्डयतु" इति सूचितवती पत्नी।

महाराजस्य अनुमतिं स्वीकृत्य नागचूडामणिः तद्दिने सायं पुनः पूर्वतनस्य अपराधस्य एव पुनर्विचारणाम् आरब्धवान्। किन्तु एतावति काले वादी चत्वारिंशत्कशाप्रहारैः दण्डितः आसीत् एव।

नागचूडामणिः निर्णयं परिवर्त्य द्वितीयः ग्रामस्थः सम्यक् दण्डनीयः इति चिन्तयन् आसीत्।

अत्रान्तरे जवनिकायाः पृष्ठतः स्थिता तस्य पत्नी पत्युः साहाय्यं कर्तुम् इच्छन्ती चतस्रः अङ्गुलीः प्रदर्शितवती। 'चत्वारिंशत् कशाप्रहारैः एषः दण्डनीयः' इति तया एवं सूचितम् आसीत्।

एतत् दृष्ट्वा नागचूडामणिः- "चतुर्भिः कशाप्रहारैः एषः दण्डनीयः इति आज्ञापितवान् अस्मि" इति उक्तवान्।

नागचूडामणेः पत्न्याः इदानीम् असमाधानम्।

'पतिः पुनः अपि मूर्खताम् एव आचरितवान्' इति चिन्तयन्ती सा मुखविकारेण असमाधानं प्रकटितवती।

एतत् दृष्ट्वा नागचूडामणिः 'एषा नासिकादंशनं सूचयन्ती अस्ति' इति भावयित्वा- "कशाप्रहारः मास्तु, एतस्य नासिकां दंशनेन कर्तयतु" इति सेवकम् आदिष्टवान्।

नागचूडामणेः पत्नी इदानीं भीता। सा हस्तसङ्केतेन शिक्षां स्थगयितुं सूचितवती। एतस्य अर्थं सम्यक् अजानन् नागचूडामणिः सेवकं पुनः उक्तवान्- "अये तिष्ठतु, मम पत्नी एव तस्य नासिकां दशति" इति।

एतत् सर्वं दृष्ट्वा राजा उदरोपपीडं हसितवान्। ततः प्रस्थानं कुर्वन् सः- "भोः भवान् न्यायाधीशः भवितुं न, अपि तु मम आस्थाने विदूषकः भवितुम् अर्हः। अद्य एव न्यायनिर्णयार्थम् अत्र अपरं प्रेषयिष्यामि" इति उक्तवान्।



# ललाटलिखितम्

शेषगिरिः कश्चन कृषीवलः। ज्योतिषविषये तस्य विश्वासः नास्ति। किन्तु तस्य पत्न्याः पूर्णिमायाः तत्र महान् विश्वासः।

तयोः विवाहयोग्या पुत्री आसीत्। पुत्र्याः विवाहः न जातः इति पूर्णिमा अतीव चिन्तामग्ना।

पार्श्वग्रामे एकः ज्योतिषिकः अस्ति इति पूर्णिमा ज्ञातवती। "अस्माकं पुत्र्याः विवाहः कदा भविष्यति इति ज्योतिषिकं पृच्छेम। भवतः विषये मम विश्वासः नास्ति। अतः अहमपि भवता सह आगच्छामि" इति पतिम् उक्तवती पूर्णिमा।

पत्न्याः आग्रहेण अनिच्छन् अपि शेषगिरिः प्रस्थितः। पूर्णिमा अपि प्रस्थिता।

यदा तौ ज्योतिषिकस्य गृहं प्राप्तवन्तौ तदा काचित् विवाहयोग्या कन्या द्वारम् उद्घाटितवती।

"मम पितरं द्रष्टुम् आगतवन्तौ वा? उपविशताम्। इदानीं सः आगच्छति" इति उक्त्वा सा अन्तः गतवती।

ज्योतिषिकः आगतवान्। तदा शेषगिरिः तं नमस्कुर्वन् " भोः, अन्यथा न चिन्तयतु। द्वारम् उद्घाटितवती सा भवतः पुत्री वा? विवाहवयः अतिक्रान्तम् इव" इति उक्तवान् विनयेन।

"सत्यम्, ब्रह्मणा यथा लिखितम् तथैव भवेत् किल। तस्य इच्छानुसारं विवाहः भवेत् कदाचित् " इति निराशया उक्तवान् ज्योतिषिकः।

तस्य वचनं श्रुत्वा पूर्णिमा आगमनप्रयोजनं सिद्धम् इति विचिन्त्य ततः प्रस्थिता। तस्याः पतिः अपि ताम् अनुसृतवान्।






## ५

(चित्रसेनादीनां कृते उग्राक्षः भोजनं व्यवस्थापितवान्। भोजनसन्दर्भे 'भयङ्करपक्षिणः आरुह्य ज्वालाद्वीपतः क्रूराः आगताः' इति वार्ता प्राप्ता। उग्राक्षः चित्रसेनादिभिः सह अरण्यं प्रविष्टवान्। ज्वालाद्वीपवासिभिः सह प्रवृत्ते युद्धे एकं शत्रुं चित्रसेनः मारितवान्। ज्वालाद्वीपवासिनः पलायितवन्तः। उग्रसेनः तीव्रं व्रणितः अभवत्। तदनन्तरम् ......)

उग्राक्षः दीर्घं निःश्वसन् सेवकानां साहाय्येन उत्थाय व्रणजनितां वेदनां प्रयत्नेन सहमानः आत्मनः शरीरम्, इतरान् व्रणितान् राक्षसान् च दृष्टवान्।

अनन्तरम् उच्चैः हुङ्कारं कुर्वन्- "पश्यतु भोः चित्रसेन! महाराक्षसस्य मम एतादृशी दुर्गतिः! एतस्य समग्रस्य महारण्यस्य अद्वितीयः प्रभुः अहम्। राक्षसजातौ प्रसिद्धे बलीन्द्रस्य वंशे जातः अहम्। एतादृशः असाधारणपराक्रमी अहं मम एव अरण्ये परदेशीयैः कैश्चित् क्षुद्रमानवैः व्रणितः! किं वदामि? ते नरपशवः मत्तः अपि समर्थतराः इति अङ्गीकरोमि? न, सर्वथा न। तेषां वाहनानां पक्षिणां कारणतः एवं जातम्। ते तु राक्षसान्तकाः पक्षिणः!" इति उद्गारं प्रकटितवान्।

चित्रसेनः उग्राक्षं सान्त्वयन्- "चिन्तां न करोतु उग्राक्ष! सर्वस्य अपि परिहारः कोऽपि




भवति एव। गतस्य चिन्तनेन कोऽपि लाभः नास्ति। अद्य प्रवृत्ते युद्धे आवयोः पराजय-कारणं ज्वालाद्वीपवासिनः न। तेषां वाहनानां पक्षिणां कारणतः एवं प्रवृत्तम्। तेषां विषये अस्माकं सर्वाणि आयुधानि निष्प्रयोजकानि अभवन्। तेषां मारणे अस्माभिः शान्ततया उपविश्य उपायः चिन्तनीयः'' इति उक्त-वान्।

''उपायः चिन्तनीयः, सत्यम्। किन्तु ततः पूर्वम् एव ते क्रूराः अस्मान् नाशयेयुः किल? पक्षिद्वयस्य कारणतः एव अस्माकम् ईदृशी गतिः! यदि विंशत्यधिकाः पक्षिणः अकस्मात् आक्रमणं कुर्युः तर्हि? भवतः राजभवनं, मम दुर्गम्, एतत् अरण्यराज्यं सर्वं तेषां वशे भविष्यति। तादृशीं परिस्थितिं द्रष्टुं मया किं जीवनीयम्?'' इति निराशया उक्तवान् उग्राक्षः।

भयङ्कराकारः बलशाली उग्राक्षः सामान्यः भीरुः मानवः इव निराशाम् अनुभवति इति दृष्ट्वा चित्रसेनः विषादम् अनुभूतवान्।

''ते ज्वालाद्वीपवासिनः अस्माकं राज्यस्य वशीकरणे प्रयत्नं कुर्युः इति चिन्तयति वा भवान्?'' इति पृष्टवान् चित्रसेनः।

''अन्यथा ते किमर्थं वा एवम् आक्रमणं कुर्युः भोः? विना कारणं कोऽपि किमपि कार्यं तु न करोति किल?'' इति उक्तवान् उग्राक्षः।

''ममापि सा एव समस्या। कुत्रापि ग्रामे निवसतः कांश्चन जनान् नेतुं केवलं तु न आगच्छन्ति इत्येव मम अभिप्रायः'' इति उक्तवान् चित्रसेनः।

''तेषु यदि इतोऽपि एकः सजीवं लब्धः स्यात् तर्हि तस्य मुखतः सर्वम् आनाययेयम्। किन्तु किं करोमि? लब्धः एकः अपि किमपि अनुक्त्वा एव प्राणान् त्यक्तवान्। हस्तगतं फलं मुखे न आगतम्'' इति व्यथया कोपेन च उक्तवान् उग्राक्षः।

''निराशा मास्तु उग्राक्ष! कदाचित् वा ते क्रूरजनाः अस्माकं वशे भवेयुः एव। तदा हिंसया वा तेषां पूर्वोत्तरं वयं ज्ञास्यामः। तदस्तु, ज्वालाद्वीपः कुत्र अस्ति? द्वीपशब्देन ज्ञायते यत् एषः समुद्रे कुत्रापि स्यात् इति। किन्तु कस्यां दिशि? तद्द्वीपवासिनः कथम्

एतान् भयङ्करपक्षिणः वशीकृतवन्तः? स्वविचारानुगुणं पक्षिणः प्रेरयन्तः ते अस्मद्-राज्यम् आगत्य मानवान् यत् अपहरन्ति तत्र किं वा कारणं स्यात्? प्रथमम् एतत्सर्वं ज्ञातव्यम्। अस्तु तावत्। अहम् इदानीं गच्छामि। व्रणोपशमनपर्यन्तं भवान् निश्चिन्तया विश्रान्तिं स्वीकरोतु। दुर्गरक्षणे इतोऽपि जागरूकता भवतु। अहम् अपि सर्वदा जागरूकतया स्थास्यामि। कोऽपि धैर्यच्युतः न भवेत्'' इति उक्त्वा चित्रसेनः परिवारेण सह स्वभवनं प्रति प्रस्थितः।

''चित्रसेन! अहम् एवं दीनावस्थायाम् अस्मि इति कमपि न वदतु। भवतः परिवारजनाः अपि एतत् न जानीयुः। कदाचित् यदि जानीयुः तर्हि सर्वे मद्विषये अतीव अनादरं प्रकटयेयुः।इदानीं तु मम विषये सर्वत्र सदभिप्रायः अस्ति। 'उग्राक्षः नाम महाशूरः' इति चिन्तयन्ति सर्वे। सामान्याः तु मम नामश्रवणेन एव कम्पन्ते। एवं स्थिते 'अहं कैश्चित् मानवैः तीव्रं व्रणितः' इति वार्ता सर्वत्र प्रसृता चेत् मम गतिः का भवेत्? अतः कृपया कुत्रापि एतं विषयं मा वदतु।'' इति उग्राक्षः भवनात् बहिः आगत्य सूचितवान्।

उग्राक्षस्य वचनं श्रुत्वा चित्रसेनः मनसि एव हसितवान्। तदा सेनानायकः समीपम् आगत्य 'महाराज!' इति वदन् चित्रसेनस्य अवधानं भञ्जितवान्।

''किं सेनापते?'' इति पृष्टवान् चित्रसेनः।




''तान् द्वीपवासिनः सम्मुखीकर्तुम् अस्माभिः सह उग्राक्षस्य अनुचराः राक्षसाः अपि यदि भवेयुः तर्हि वरं स्यात्। यतः वयं न जानीमः यत् कदा वा ज्वालाद्वीपवासिनः महत्या सङ्ख्यया आगत्य अस्माकं राज्यस्य उपरि आक्रमणं कुर्युः इति '' इति उक्तवान् सेनापतिः।

एतत् वचनं श्रुत्वा चित्रसेनः कुपितः। तथापि सः कोपं निगृह्णन् सेनापतिम् उक्तवान्- ''तन्नाम अस्माकं राज्यस्य रक्षणार्थं राक्षससेनायाः उपयोगः स्वीकरणीयः इति किल भवतः अभिप्रायः? यावत् मम हस्ते खड्गः स्थास्यति तावत् एतत् सर्वथा असाध्यम्। यदा अहं मम राज्यस्य रक्षणं कर्तुं न शक्ष्यामि तदा राज्यत्यागं



करिष्यामि, न तु अन्यस्य राक्षसानां वा साहाय्यं स्वीकरोमि। क्षत्रियकुलोत्पन्नः, तत्रापि राजा, अहम् एव भीतः भवामि चेत् कथम्? राक्षसानां साहाय्यं स्वीकृतं चेत् अस्माकम् असामर्थ्यं स्वयं प्रकटितं भविष्यति। कोऽपि वीरः 'भीरुः' इति अपवादं श्रोतुं किं सिद्धः? अतः राक्षसानां साहाय्यं सर्वथा मास्तु एव" इति।

एतेन वचनेन सेनापतेः मुखभङ्गः जातः इव। सः मौनं स्थितवान्।

चित्रसेनः तत्परिवारजनाः च अरण्यमार्गेण किञ्चिद्दूरं यावत् गतवन्तः तावता पृष्ठतः कश्चन महाकोलाहलः श्रुतः। चित्रसेनः आश्चर्येण पृष्ठतः परिवृत्य दृष्टवान्।

विकृताकारम् आयुधं गृहीत्वा, श्वासोच्छ्वासं कर्तुम् अपि कष्टम् अनुभवन्तौ राक्षसौ धावन्तौ आगत्य "महाराज! तिष्ठतु, तिष्ठतु तावत्" इति वदतः स्म। प्रतिध्वनितः तयोः स्वरः चतुर्गुणिततया श्रूयते स्म।

चित्रसेनः गमनं स्थगितवान्। सेनापतिः कम्पमानस्वरेण "महाप्रभो! ज्वालाद्वीपस्य ते पिशाचाः पुनः अपि आक्रमणं कृतवन्तः इति भाति" इति उक्तवान्।

चित्रसेनः पूर्वस्यां दिशि आकाशं पश्यन् - "सूर्योदयः इदानीम् आसन्नः इव। दिवासमये ते प्रायः आक्रमणं न कुर्युः एव" इति उक्तवान्।

तावति काले वेगेन श्वासोच्छ्वासं कुर्वन्तौ तौ राक्षसौ समीपम् आगत्य "महाराज! भवन्तः एतत्क्षणे एव आनेतव्याः इति उग्राक्षमहाराजः आज्ञापितवान् अस्ति। सः इदानीम् खातप्रदेशे भवतां प्रतीक्षायाम् अस्ति" इति उक्तवन्तौ।

"किमर्थं तत्र आगन्तव्यम्?" इति कुतूहलेन पृष्टवान् चित्रसेनः।

"तेषु आक्रमणकारिषु एकः दृष्टः अस्ति। तदर्थम् एव त्वरया आगन्तव्यम् इति वार्ता प्रेषिता" इति उक्तवन्तौ राक्षसौ!

"एतावद् वक्तुं भवन्तौ प्रलयं दृष्टवन्तौ इव धावन्तौ आगतवन्तौ वा? वशे आगतः शत्रुपक्षीयः कुत्र वा पलायनं कुर्यात्?" इति पृष्टवान् चित्रसेनः।

"शत्रुपक्षीयः न वशे आगतः, अपि तु वृक्षस्य उपरि अस्ति। भीतः सः अधः आगन्तुं न सिद्धः। भवतः आगमनं विना कार्यं न सिध्यति इति चिन्तयति उग्राक्षमहाराजः। अतः त्वरया आगन्तव्यम् एव" इति उक्तवन्तौ तौ।

"प्रायः एतौ मद्यस्य प्रभावे स्तः। शत्रुपक्षीयः कुतः वा अधः न आगच्छेत्? ततः सः कुत्र वा गच्छेत्? तस्य अवतारणे एतेषां किं वा कष्टं भवेत्?" इति चिन्तितवान् चित्रसेनः।

एवं चिन्तयन् सः खातप्रदेशं प्राप्तवान्। तत्र कश्चन ग्रामः आसीत्। ग्रामस्य बहिर्भागे कस्यचित् महावृक्षस्य अधः राक्षसाः ग्रामवासिनः च स्थिताः आसन्। सर्वेषां लक्ष्यं वृक्षस्य शिखरे आसीत्।

तत्र अन्तिमशाखायां स्थित्वा व्याघ्रचर्मधारी कश्चन खड्गं हस्ते गृहीत्वा गर्जति स्म- "अहं सर्वथा अधः न आगच्छामि। अधः आगत्य अहं किं राक्षसानाम् आहारः भवेयम्? सर्वथा न शक्यते एतत्। यदि कोऽपि वृक्षम् आरुह्य आगच्छेत् तर्हि तम् एतेन खड्गेन मारयिष्यामि, स्वयम् अपि मरिष्यामि" इति।

चित्रसेनः उग्राक्षस्य समीपं गत्वा "किम् एतत् सर्वम्?" इति पृष्टवान्।

चित्रसेनस्य वचनेन उग्राक्षः बाह्यप्रपञ्चं प्रविष्टवान् इव उद्वेगेन उक्तवान्- "आगतवान् खलु चित्रसेन! तत्र पश्यतु। सः





ज्वालाद्वीपवासी क्रूरमानवः। रात्रौ प्रवृत्ते युद्धे पलायनं कर्तुम् अशक्तः सन् अत्र स्थितवान्। सजीवं तस्य ग्रहणं अशक्यम् इव भाति। एतस्य मुखतः ज्ञातव्यं तु बहु अस्ति। वयं राक्षसाः तं खादेम इति सः भीतः। अभयदानेन भवान् कथञ्चित् तम् अधः आनयेत् इति मम विश्वासः" इति।

चित्रसेनः वृक्षस्य अन्तिमशाखां पश्यन् उच्चैः उक्तवान्-"भोः, भीतिः मास्तु। अधः आगच्छतु। भवतः प्राणापायः न भविष्यति" इति।

"आगतः अयम् अपरः नूतनः। 'आगच्छतु अधः' इति वक्तुम् अर्हः कोऽयं महाराजः भवान्?" इति कर्कशस्वरेण पृष्टवान् व्याघ्रचर्मधारी।

"आम् भोः, अहम् एतस्य प्रदेशस्य महाराजः। एतत् अरण्यम् अपि मम परिपालने एव अस्ति। महाराजः अहम् अभयदानपूर्वकं वदामि - अधः आगच्छतु कृपया इति" इति उक्तवान् चित्रसेनः।

चित्रसेनवचनानन्तरं तत्रत्याः सर्वे उच्चैः उद्घोषितवन्तः- "चित्रसेनमहाराजः जयतात्" इति।

जयघोषं श्रुत्वा किञ्चिदिव समाहितः सः व्याघ्रचर्मधारी सन्देहं प्रकटितवान्- "भवान् अभयं ददाति, सत्यम्। एते राक्षसाः? एते अङ्गाङ्गानि विच्छिद्य मां न खादेयुः इत्यत्र कः विश्वासः?" इति।

"तेभ्यः भवतः कापि हानिः न भविष्यति। एते राक्षसाः मम आज्ञापालकाः एव" इति वदन् चित्रसेनः उग्राक्षं दृष्टवान्।

उग्राक्षः नेत्रसङ्केतेन इतरराक्षसान् सूचितवान्।

तदा सर्वे राक्षसाः 'चित्रसेनमहाराजः जयतात्' इति जयकारं कृत्वा विनयेन स्थितवन्तः।

उग्राक्षः अपि विनयेन तिष्ठन्- "महाराक्षसस्य मम कीदृशी गतिः आगता" इति वदन् दन्तान् परस्परं घट्टितवान्।

"अस्तु, भवतः अभयदाने विश्वस्य अधः आगच्छन् अस्मि" इति वदन् व्याघ्रचर्मधारी भूमौ अवतीर्य स्थितवान्।

"इदानीं भवतः कस्मात् अपि अपायः नास्ति। भवतः खड्गं सेनानायकस्य हस्ते अर्पयतु" इति उक्तवान् चित्रसेनः। व्याघ्र-चर्मधारी बिना विरोधं खड्गं सेनानायकस्य हस्ते दत्तवान्।

"चित्रहिंसां विना एव एतस्य मुखतः सर्वं रहस्यं भवान् बहिः आनेतुं शक्नोति इति भाति" इति उक्तवान् उग्राक्षः।

तत् श्रुत्वा व्याघ्रचर्मधारी- "अवश्यं सर्वं वदामि। वयं सर्वे समानाः इति चिन्तितवन्तः भवन्तः। ते ज्वालाद्वीपवासिनः विश्वास-द्रोहिणः। वञ्चनया माम् अत्र आनीतवन्तः। अपाये उपस्थिते मां परित्यज्य एव पलायित-वन्तः। एतावति काले ते पूर्वसमुद्रे स्थितं ज्वालाद्वीपं प्राप्तवन्तः स्युः" इति उक्तवान्।

"एवं तर्हि भवान् ज्वालाद्वीपवासी न वा? एतत् सत्यं वा?" इति आश्चर्येण पृष्टवान् चित्रसेनः।

"यदि अहं ज्वालाद्वीपवासी स्याम् तर्हि कथं वा भवतां वशे आगच्छेयम्? द्वीप-वासिनां साहाय्यकस्य कपिल- पुराधीशस्य नागवर्ममहाराजस्य सैन्यस्य सैनिकः अहम्। अमरपालः इति मम नाम" इति उक्तवान् व्याघ्रचर्मधारी।

नागवर्मणः नामश्रवणेन एव दिग्भ्रान्तः उग्राक्षः- "सः सामान्यः सेनानी नागवर्मा इदानीं कपिलपुरस्य राजा वा? कदा सः सिंहासनम् आरूढवान्? राज्ञः वीरसिंहस्य का गतिः जाता?" इति कुतूहलेन पृष्टवान्।

"वीरसिंहमहाराजः प्रायः ज्वालाद्वीपस्य



कारागारे दिनानि गणयन् अस्ति। नागवर्मा न केवलं वीरसिंहस्य राज्यम् अपहृतवान्, अपि तु तदीयाम् अद्वितीयां पुत्रीं कान्तिमतीं बलात्कारेण परिणेतुं प्रयत्नं कुर्वन् अस्ति। एतावदेव न, महादुष्टानां ज्वालाद्वीपवासिनां साहाय्येन समीपस्थानि राज्यानि वशीकर्तुम् अपि योजनां कुर्वन् अस्ति" इति उक्तवान् अमरपालः।

स्वराज्यं परितः स्थितानां राज्यानां विवरणं किमपि न जानाति चित्रसेनः। एतस्य अमरपालस्य वचनेन ज्ञायते यत् सीमाप्रान्ते स्थितस्य कस्यचित् स्नेहं ज्वालाद्वीपवासिनः सम्पादितवन्तः सन्ति इति। किन्तु अमरपालः यत् वदति तत् सर्वं सत्यम् इति कथं वा विश्वसनीयम्? तस्य वचने काऽपि वञ्चना तु न स्यात् किल?

चित्रसेनः यावत् एवं चिन्तयन् आसीत् तावता धावताम् अश्वानां खुरपुटध्वनिः दूरतः श्रुतः। अल्पे एव काले तस्य मन्त्री चतुर्भिः सैनिकैः सह तत्र उपस्थितवान्। सर्वे अश्वात् अवतीर्णवन्तः।

मन्त्री साक्षात् चित्रसेनसमीपम् आगत्य- "महाप्रभो! धवलगिरितः भवतः पित्रा वार्ता प्रेषिता यत् नागवर्मनामकः कश्चन राजद्रोही ससैन्यः धवलगिरेः उपरि आक्रमणं कृतवान् अस्ति इति। भवतः सैन्यसाहाय्यम् अपेक्षते सः" इति निवेदिनवान्।

चित्रसेनः सेनानायकं पश्यन्- "भवान् अर्धेन सैन्येन सह धवलगिरिं गच्छतु। अहम् अत्रत्यं रक्षणाभारं निर्वक्ष्यामि" इति उक्तवान्।

"यथाज्ञापयति देवः" इति वदन् सेनानायकः ततः निर्गतवान्।

"एतस्य नागवर्मणः सैन्यस्य पृष्ठतः पक्षिवाहनाः ज्वालाद्वीपवासिनः अपि भवेयुः किल?" इति वदन् चित्रसेनः अमरपालं प्रश्नार्थकदृष्ट्या दृष्टवान्।

तत्क्षणे किमपि वक्तुम् उद्युक्तः अमरपालः संशयदृष्ट्या एकवारं परितः दृष्टवान्। पुनः आकाशस्य दिशि दृष्टिं प्रसारितवान्।

— (अनुवर्तते)






# पुण्यकार्यम्

दिनस्य अनन्तरं दिनं यथा आगच्छति तथैव त्रिविक्रमः अपि यथापूर्वं श्मशानं गतवान्। वृक्षम् आरुह्य शवं स्कन्धे आरोप्य अधः आगतवान्। मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः- "अये महाराज! भवान् न केवलम् उदारी, अपि तु पुण्यकार्येषु अपि आसक्तः दृश्यते। पुण्यकार्याणि न केवलं कर्तारम् उद्धरन्ति, अपि तु समाजस्य अपि हितम् एव आचरन्ति। कदाचित् एकम् अपि पुण्यकार्यम् अकृत्वा केचन भगवतः दयायाः पात्राणि भवन्ति इति तु आश्चर्यम् एव। अत्र उदाहरणरूपेण कस्यचित् कृपणस्य महाचोरस्य च कथा मम स्मृतिपथम् आगच्छति। निरन्तरं भारं वहतः भवतः श्रमनिवारणार्थम् एतां कथां श्रावयामि। सश्रद्धं शृणोतु तावत्" इति उक्त्वा कथाम् आरब्धवान्।

पाटलीपुत्रनगरस्थः लोभचन्द्रः नाम

## वेतालकथा



धनिकः कदाचित् अज्ञातेन रोगेण पीडितः अभवत्। केनापि वैद्येन रोगनिवारणं किं, रोगकारणं ज्ञातुम् अपि न शक्तम्।

एकदा कश्चन संन्यासी लोभचन्द्रं दृष्ट्वा उक्तवान्- "भवान् धनव्यामोहकारणतः एकम् अपि पुण्यकार्यं न आचरितवान्। विपरीततया यथेष्ठं पापकार्याणि आचरितवान्। एतानि पापानि एव व्याधिरूपेण भवन्तं पीडयन्ति सन्ति। केवलं पुण्यकार्याणि भवतः व्याधिं निवारयेयुः, न अन्यत्। इतःपरं वा पुण्यकार्याणि आचरतु भवान्" इति।

"किं नाम पुण्यकार्यम् इति भवान् एव सूचयतु कृपया" इति संन्यासिनं प्रार्थितवान् लोभचन्द्रः।

"मनःपूर्वकम् आत्मप्रेरणया यानि कार्याणि क्रियन्ते तानि सर्वाणि पुण्यकार्याणि एव। किम् अधिककथनेन? भवान् एव विचिन्त्य व्यवहरतु" इति उक्त्वा संन्यासी ततः गतवान्।

तदा लोभचन्द्रस्य बान्धवाः गृहसदस्याः च तस्य समीपम् आगतवन्तः। लोभचन्द्रस्य द्वौ पुत्रौ, द्वे पुत्र्यौ। तैः अपि संन्यासिनः वचनं श्रुतम् आसीत्।

"अन्नदानं करवाम" इति उक्तवती लोभचन्द्रस्य पत्नी।

"अन्नदानं नाम भोक्ता यथा तृप्तिम् अनुभवेत् तथा परिवेषणं करणीयम्। अस्मद्गृहस्य भोजनेन वयम् एव तृप्तिं न अनुभवामः। एवं स्थिते अभ्यागतस्य का कथा? कथञ्चित् भोजनं परिवेषयितुं आत्मा अपि न अङ्गीकरोति। अतः अन्यत् किमपि पुण्यकार्यं सूचयन्तु" इति उक्तवान्। लोभचन्द्रः।

तत्र स्थिताः सर्वे अपि एकैकां सूचनां दत्तवन्तः।

एकः वस्त्रदानं सूचयति। अपरः विद्यादानम् उत्तमं वदति।

अन्यः कन्यादातुः साहाय्यकरणम् उचितः मार्गः इति निवेदयति।

इतरः परिवर्तान् सङ्गृह्य सर्वेभ्यः दरिद्रेभ्यः दानम् एव सुलभतरः पुण्यप्रदश्च उपायः इति प्रतिपादयति।

अन्ते लोभचन्द्रस्य पत्नी पुनः उक्तवती- "तत् किमपि मास्तु। तीर्थयात्रा एव पुण्यजनकं कार्यम्। तीर्थयात्रया वयं सर्वान् देवान् द्रष्टुं शक्नुमः। इतोऽपि अतिरिच्य पुण्यजनकं कार्यं किं स्यात्?" इति।

तत् श्रुत्वा लोभचन्द्रः उक्तवान्- "देवदर्शनार्थं तीर्थयात्रा किमर्थं करणीया? 'एकं सत्, विप्राः बहुधा वदन्ति' इति हि श्रुतिः। देवः एकः एव। नामान्तराणि बहूनि। अतः भवन्तः ग्रामे स्थितं देवालयं गत्वा रामं पूजयित्वा मम रोगनिवारणार्थं प्रार्थनां कुर्वन्तु। तदेव पुण्यं पर्याप्तं मम" इति।



धनव्ययं कर्तुम् अनिच्छन् लोभचन्द्रः एवं वदति इति सर्वे ज्ञातवन्तः। किन्तु तस्मै प्रतिवचनं वक्तुम् अनिच्छन्तः ते मौनं स्थितवन्तः।

कानिचन दिनानि अतीतानि। सर्वे प्रतिदिनं रामं पूजयन्ति प्रार्थयन्ति च। किन्तु एतेन लोभचन्द्रस्य आरोग्ये किमपि परिवर्तनं न जातम्। रोगबाधा न न्यूनीजाता।

"तेन संन्यासिना असत्यम् उक्तम्। वाणिज्ये आसक्तः अहं देवस्मरणं न कृतवान्। तदेव मया आचरितं पापम्। किन्तु इदानीं प्रतिदिनं देवं स्मरन् अस्मि। इतोऽपि अधिकं पुण्यकार्यं किं स्यात्? अतः मम रोगस्य कारणं पापं न, अपि तु मम दुरदृष्टम् एव" इति लोभचन्द्रः प्रतिदिनं स्वपरिवारजनान् खेदेन वदति स्म।

'लोभचन्द्रस्य गृहे धनसम्पत्तिः यथेष्टम् अस्ति' इति कश्चन चोरः ज्ञातवान्। सः लोभचन्द्रस्य अनारोग्यम् अपि जानाति।

'यदि लोभचन्द्रः स्वस्थः भवेत् तर्हि गृहं प्रवेष्टुम् अवकाशः न लभ्येत। अतः इदानीम् एव केनापि उपायेन गृहं प्रवेष्टव्यम्। चौर्यस्य मार्गः अन्वेष्टव्यः च' इति आलोच्य सः एकं समीचीनम् उपायम् अपि चिन्तितवान्।

एतदनुसारं सः दिनद्वयं यावत् रात्रौ लोभचन्द्रस्य गृहं गतवान्। तत्र कस्यापि वस्तुनः चौर्यम् अकृत्वा आगमनचिह्नानि स्पष्टतया यथा ज्ञातानि भवेयुः तथा कृत्वा प्रत्यागतवान्।

"कश्चन चोरः प्रतिदिनम् आगत्य



प्रतिगच्छन् अस्ति" इति लोभचन्द्रस्य पत्नी ज्ञातवती।

सा पुत्रान् निवेद्य उक्तवती- "एतां वार्तां पितरं न निवेदयन्तु। अनारोग्यपरिस्थितौ यदि सः एतां वार्तां जानीयात् तर्हि परिस्थितिः विपरीता भवेत्" इति।

तृतीये दिने चोरः संन्यासिवेषेण लोभचन्द्रस्य गृहम् आगत्य उक्तवान्- "भोः महाशय! भवान् भवतः परिवारः च महतः अपायस्य परिस्थितौ अस्ति। एतत् निवेदयितुम् एव अहम् अत्र आगतवान्" इति।

तदा लोभचन्द्रः भीतिमिश्रितस्वरेण " कः श्रीमन्! तादृशः घोरः अपायः?" इति पृष्टवान्।

"लक्ष्म्याः स्वभावः अतीव चञ्चलः। बहोः कालतः सा भवतः गृहे बन्धने अस्ति। इदानीम् अन्यत्र गन्तुम् उद्युक्ता। तदर्थं सा द्विवारं प्रयत्नं कृत्वा पुनः स्थितवती। तृतीयवारं यदि सा प्रयत्नं कुर्यात् तर्हि निश्चयेन गच्छेत् एव। अत्र संशयः एव मास्तु। एषु दिनेषु भवतः गृहे द्विवारं चौर्यार्थं प्रयत्नः प्रवृत्तः। भवान् तत् जानीयात् एव" इति उक्तवान् सः संन्यासिवेषधारी।

एतत् श्रुत्वा आश्चर्यम् अनुभवन् लोभचन्द्रः पत्नीपुत्रान् एतद्विषये पृष्टवान्। ते संन्यासिनः वचनं सत्यम् इति अङ्गीकृतवन्तः।

तदा अतीव भीतः लोभचन्द्रः– "स्वामिन्! अत्रैव लक्ष्म्याः स्थापनार्थं कोऽपि उपायः अस्ति वा?" इति पृष्टवान्।

"किमर्थं न स्यात्? अहम् एव अत्र साहाय्यं कुर्याम्। पञ्चभक्ष्य-परमान्नसहितं दिव्यं भोजनं व्यवस्थापयतु। अनन्तरम् अहं लक्ष्म्याः पूजां करिष्यामि। अन्ते सर्वैः तीर्थप्रसादादिकं स्वीकरणीयम्। तदा सन्तुष्टा लक्ष्मीः अत्रैव निवसिष्यति। कदाऽपि इतः गमनस्य आलोचनाम् अपि न करिष्यति। सन्तोषेण चिरम् अत्रैव स्थास्यति" इति आत्मविश्वासेन उक्तवान् चोरसंन्यासी।

लोभचन्द्रः एतं प्रस्तावम् अङ्गीकृतवान्।



तद्दिने रात्रौ लोभचन्द्रस्य पत्नी विशेषभोजनं सज्जीकृत्य चोराय परिवेषितवती। अनन्तरं चोरः लक्ष्मीपूजां कृत्वा सर्वेभ्यः तीर्थ-प्रसादादिकं दत्तवान्। सः तीर्थे मदजनकं वस्तु योजितवान् आसीत्। अतः सर्वे मूर्च्छावस्थां गतवन्तः।

तदा चोरः लोभचन्द्रस्य उपधानस्य अधः स्थितां धनपेटिकायाः कुञ्चिकां स्वीकृत्य पेटिकाम् उद्घाटितवान्। तत्रत्यानि सुवर्ण-रजताभरणानि, रूप्यकाणि च दृष्ट्वा सः अतीव सन्तुष्टः। आत्मना दत्तस्य मूर्च्छा-जनकस्य औषधस्य परिणामः सर्वेषु जातः वा न वा इति परिशीलयन् सः सर्वत्र दृष्टिं प्रसारितवान्।

लोभचन्द्रस्य पत्न्याः मुखं दृष्टवतः तस्य मनसि अधीरता उत्पन्ना।

'माता इव प्रीत्या भक्त्या च एषा भोजनं परिविष्टवती। अनुरोधपूर्वकम् आतृप्ति भोजनं कारितवती। एतादृश्याः मातुः गृहे चौर्यं कुर्वन् अस्मि किल! किम् अहम् एतां खेदयामि? न, कदापि एव भवितुं न अर्हति। अहं चोरः स्यां, न तु कृतघ्नः' इति चिन्तितवान् सः।

चोरः पेटिकां यथापूर्वं कीलयित्वा कुञ्चिकां लोभचन्द्रस्य उपधानस्य अधः स्थापितवान्। ततः गन्तुम् उद्युक्तः च। तदा अन्यः विचारः आगतः- 'अत्र सर्वे मूर्च्छा-वस्थायां सन्ति। एतादृशे सन्दर्भे अन्यः कश्चन चोरः आगत्य सर्वम् अपहरेत् किल'. इति। अतः सः तत्रैव स्थितवान्।

सः आरात्रं निद्राम् अकुर्वन् गृहरक्षणे जागरूकः आसीत्। प्रभाते सर्वप्रथमं लोभ-चन्द्रस्य पत्नी सचेतना जाता। सा चोर-संन्यासिनं नमस्कर्तुम् उद्युक्ता।

तदा चोरसंन्यासी आत्मनः कथां निवेद्य- "अम्ब! इदानीं मयि परिवर्तनम् आगतम्। यदि कोऽपि समीचीनः उद्योगः लभ्येत तर्हि चौर्यवृत्तिं त्यजामि" इति उक्तवान्।

लोभचन्द्रस्य पत्नी चोरस्य प्रामाणिकता-विषये आश्चर्यं प्रकटयन्ती- "एतां वार्तां मम पतिं न निवेदयतु। यतः सः भवन्तं न

क्षाम्येत्। कथञ्चित् भवता कृतया लक्ष्मी-पूजया एव एतत् गृहं रक्षितम्। अतः भवता आत्मस्वरूपस्य कथनस्य आवश्यकता कापि नास्ति'' इति।

किञ्चित्कालानन्तरं लोभचन्द्रः जागरितः अभवत्। सः उत्थाय मञ्चतः अवतीर्य गृहे सर्वत्र अटित्वा- ''किम् आश्चर्यम् एतत्? इतःपूर्वम् इव किमपि कष्टं न अनुभवामि। प्रायः लक्ष्मीपूजायाः फलम् एतत्। कीदृशी सुखनिद्रा आसीत् सा!'' इति उत्साहेन उक्तवान्।

तत् श्रुत्वा चोरः- ''भोः श्रीमन्! एतया मात्रा निवार्यमाणः अपि अहं वस्तुस्थितिं कथयन् अस्मि। लक्ष्मीपूजायाः किमपि वैशिष्ट्यं नास्ति'' इति वदन् आत्मना कृतं समग्रं निवेदितवान्।

वेतालः एवं कथां समाप्य अवदत्- ''राजन्! व्याधिपीडितं लोभचन्द्रं द्रष्टुम् आगतः संन्यासी मनःपूर्वकम् आत्मप्रेरणया सत्कार्यं कृत्वा पुण्यं सम्पादयितुम् उक्तवान्। पुण्यकार्यात् ऋते अन्येन व्याधिः न शाम्यति इति साग्रहम् उक्तवान् च। किन्तु लोभचन्द्रः चोरं आतृप्ति यत् भोजितवान् तत्र कारणं - लक्ष्मीः स्वगृहे एव रक्षणीया इति स्वार्थः एव। एतत् तु न पुण्यकार्यम्। तथापि तस्य रोगः शान्तः। अत्र किं कारणम्? एतस्य युक्तम् उत्तरं जानन् अपि यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा त्रिविक्रमः उक्तवान्- ''जानन् अजानन् वा यः अमृतं सेवते सः अमरत्वं प्राप्स्यति एव। तथैव सत्कार्यं परहितार्थं स्वार्थार्थं वा कृतं चेदपि तस्य फलं तु सिध्यति एव। लोभचन्द्रः मनःपूर्वकम् आत्मप्रेरणया एव चोरसंन्यासिनं भोजितवान्। एतत् तु पुण्यकार्यम्। अतः तस्य व्याधिः अपगतः। चोरः अपि सन्मार्गं आगतवान्। अतः लोभचन्द्रः पुण्यकार्यं न कृतवान् इति कथनम् अयुक्तम् एव'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# तीर्थयात्रा

देवाबरनामके ग्रामे केशवः नाम महान् वणिक् आसीत्। तस्य पत्नी श्यामला। तीर्थयात्रा करणीया इति तयोः कदाचित् इच्छा जाता। अतः तौ दम्पती ग्रामस्थं पण्डितं रामशर्माणं पृष्टवन्तौ – "तीर्थयात्रार्थं समीचीनः मुहूर्तः कः?" इति।

रामशर्मा समीचीनं दिनं निश्चित्य तौ बोधितवान् –"भवतोः चिन्तनं युक्तम् एव अस्ति। आगामिन्यां दशम्यां प्रयाणार्थम् उत्तमः मुहूर्तः अस्ति। तस्मिन् मुहूर्ते भवतोः प्रयाणं भवतु। अस्मिन् शुभप्रयाणसमये गृहं. क्षेत्रं, पुत्राः, वाणिज्यं, लाभः, नष्टम् इत्यादीनां चिन्तनं विना सर्वदा देवध्यानम् एव करणीयम्। तथा न क्रियते चेत्, तीर्थयात्रायाः प्रयोजनं न भवति। एतत् न विस्मर्यताम्" इति।

निश्चिते दिने तौ दम्पती गृहतः प्रस्थाय पुण्यक्षेत्राणां दर्शनं कुर्वन्तौ एकस्मिन् दिने मध्याह्नसमये किञ्चन नदीतीरं प्राप्तवन्तौ। तत्र वृक्षाणाम् एकं वनम् आसीत्। श्यामला कस्यचित् वृक्षस्य छायायाम् उपविष्टवती। केशवः स्नानार्थं गच्छामि इति उक्त्वा नदीं प्रति गतः।

नद्याः पार्श्वे पर्वतश्रेणिः आसीत्। तत्र तदा तदा लघुमणयः लभ्यन्ते इति केशवेन कदाचित् श्रुतम् आसीत्। स्नानसमये तदेव चिन्तयन् सः स्नानानन्तरं पत्न्याः समीपं गतवान्।

तस्य आगमनसमये पत्नी वृक्षम् आधारीकृत्य निद्रां कुर्वती आसीत्। तस्याः वामहस्तस्य पार्श्वे एकः लघुमणिः पतितः आसीत्। केशवः समीपं गत्वा आश्चर्येण मणिं परिशीलितवान्।

इदानीं किं करणीयम् इति निमेषद्वयपर्यन्तं

चिन्तितवान् सः। तदा पण्डितस्य रामशर्मणः हितबोधनं स्मृतवान्। धन-व्यामोहः न उचितः। अस्मिन् विषये दृढसङ्कल्पः कृतः अस्ति। किन्तु पत्नी एतादृशं सङ्ग्रहीतुम् इच्छेत्। अतः एतद्विषये तस्याः ज्ञानं यथा न भवेत् तथा करणीयम् इति चिन्तितवान् केशवः।

एवं चिन्तयित्वा केशवः एकं लघुगर्त कृत्वा तत्र मणिं संस्थाप्य तदुपरि मृत्तिका-वरणं कृतवान्।

तस्याः जागरणानन्तरं तौ द्वौ अपि अग्रे गतवन्तौ।

मार्गे केशवः पत्नीम् उक्तवान् -''नद्यां स्नानं समाप्य यदा अहम् आगतवान्, तदा भवत्याः पार्श्वे किञ्चित् कान्तियुक्तं वस्तु दृष्टवान्''इति।

''दृष्टवान् वा ? एकः लघुमणिः किल ?'' इति पृष्टवती श्यामला। एतत् श्रुत्वा केशवः आश्चर्यचकितः।

सः संशयदृष्ट्या तां दृष्टवान्। तदा श्यामला सावधानम् उक्तवती - ''यदा मम तन्द्रा आसीत् तदा कश्चन गृध्रः आगत्य वृक्षशाखायाम् उपविष्टवान्। तस्य चञ्चौ कान्तियुक्तं किमपि वस्तु दृष्टम्। तावति काले मणिः मम पार्श्वे एव पतितः। सः मणिः वज्रस्य इति मया ज्ञातम्। अत्रान्तरे मम निद्रा आगता'' इति।

''सः मणिः अपेक्षितः इति भवत्याः इच्छा न जाता वा ?'' इति आश्चर्येण पृष्टवान् केशवः।

''तादृशी इच्छा कथं वा भवति ? पुण्यसम्पादनार्थम् आवां प्रस्थितौ, न तु वज्रसम्पादनार्थम्। तीर्थयात्रासमये यदि आवां मणि-रत्नादीनि मृत्तिकासमानम् इति न चिन्तयेव तर्हि तीर्थयात्रायाः प्रयोजनं एव नास्ति'' इति उक्तवती श्यामला।

तस्याः वचनं श्रुत्वा एषा ममापेक्षया अधिकं ज्ञानवती इति चिन्तयतः केशवस्य पत्नीविषयकः आदरभावः अधिकः जातः।






अस्माकं देवालयाः

# काञ्चीपुरम्

कदाचित् ब्रह्मदेवस्य इच्छा उत्पन्ना यत् एकः यज्ञः करणीयः इति। तदर्थं योग्यं स्थलं काञ्चीपुरम् इति विचिन्त्य सः तत्र यज्ञम् आरब्धवान्। काञ्चीपुरं सत्यव्रतक्षेत्रम् इत्यपि प्रसिद्धम् आसीत्।

सरस्वतीदेवी एतत् न इष्टवती। यज्ञवाटिकां जलमयं कर्तुं सा वेगेन प्रवाहरूपेण आगतवती। तदा महाविष्णुः सा सरस्वतीदेवी अग्रे गन्तुं यथा न शक्नुयात् तथा कर्तुं तत्र शयितवान्।





तदनन्तरं ब्रह्मदेवस्य प्रार्थनानुसारं महाविष्णुः वरदराजस्वामिरूपेण भक्तान् अनुगृह्णन् तत्रैव स्थितवान्। प्रसिद्धः वरदराजस्वामिनः आलयः पुरातनालयानाम् आधारभूमौ एव निर्मितः अस्ति।




पल्लवराजेन राजसिंहेन निर्मितः कैलासनाथस्य आलयः 'अद्भुतशिल्पकलात्मकः' इति प्रसिद्धः अस्ति। गर्भगृहस्थं शिवलिङ्गं षोडशफलकैः निर्मितम् अस्ति। आलयप्राकारं परितः अष्टपञ्चाशत् लघुदेवालयाः सन्ति।

पल्लववंशीयेन एव अन्येन महाराजेन नन्दिवर्मणा निर्मितः वैकुण्ठपेरुमाळ् आलयः अपि अद्भुतशिल्पकलात्मकः इति श्रूयते। एषः आलयः अट्टत्रयेण निर्मितः। अत्र महाविष्णुः स्थितः इव, उपविष्टः इव, शयितः इव च चित्रितः दृश्यते।





अत्र विराजमानः एकाम्बरनाथालयः अपि अत्यन्तं प्राचीनः। कस्मिंश्चित् काले अत्र सहस्रस्तम्भैः निर्मितः मण्डपः आसीत्। इदानीं तस्मिन् मण्डपे षोडशोत्तर-षट्शतस्तम्भाः (६१६) सन्ति। विशाले अस्मिन् देवालयस्य प्राकारे अनेके आलयाः, मण्डपाः, मन्दिरशिखराणि, तटाकाः च सन्ति।

पार्वतीपरमेश्वरयोः विवाहं द्रष्टुं सर्वे देवताः ऋषयः च कैलासं गतवन्तः। तदा परमेश्वरः भरतभूमेः समतोलनार्थं अगस्त्यमुनिं दक्षिणदेशं गन्तुम् आदिष्टवान्।





अगस्त्यः शिवस्य आज्ञाम् अङ्गीकृत्य गच्छन्, 'शिवपार्वत्योः विवाहस्य दर्शनभाग्येन अहम् अनुग्रहीतव्यः' इति प्रार्थितवान्। तस्य इच्छापूरणार्थं पार्वतीदेवी कन्यारूपेण काञ्चीपुरस्य नदीतीरे लिङ्गरूपस्य परमेश्वरस्य पूजाम् आरब्धवती।

पार्वतीदेवी भापनीया इति विचिन्त्य लिङ्गं प्रवाहेण नश्यतु इति परमेश्वरः महान्तं प्रवाहम् उत्पादितवान्। किन्तु पार्वती हृदयेन शिवलिङ्गम् आलिङ्ग्य प्रवाहेण सह स्वयं गन्तुं सिद्धा। तदा शिवः प्रत्यक्षीभूय तां परिणीतवान्। अगस्त्यः पार्वतीपरमेश्वरयोः विवाहं दृष्ट्वा अत्यन्तं सन्तुष्टः।





एतस्य आलयस्य प्राङ्गणे सहस्रवर्षेभ्यः पूर्वतनः आम्रवृक्षः अस्ति। अतः एव एषः एकाम्बरनाथस्य आलयः इति उच्यते। एषः वृक्षः चतुर्णां वेदानां सङ्केतरूपेण चतुर्विधफलानि फलति इति तु विशेषः।

अस्माकं देशे विद्यमानेषु पुण्यक्षेत्रेषु काञ्चीपुरम् अपि अन्यतमम्। अत्र आदिशङ्कराचार्यः कामकोटिपीठं स्थापितवान्। हजरत् हमीद् अनालिया नामकः कश्चन यवनगुरुः अत्र एव निवसति स्म।






कस्मिंश्चित् काले एतत् नगरं बौद्धमतस्यापि केन्द्रम् आसीत्। सप्तमे शतके ह्यूयन्त्साङ्ग् नामकः कश्चन चीनायात्रिकः एतत् नगरम् आगतवान् आसीत्। 'तत्सन्दर्भे मया अत्र बहवः बौद्धविहाराः दृष्टाः' इति सः स्वग्रन्थे लिखति। किन्तु तत् सर्वं कालप्रवाहेण नष्टं जातम्।



# कविसम्माननम्

पूर्वं वत्सदेशं राजा विशाखदत्तः पालयन् आसीत्। तदा कविजनानां प्रोत्साहः वा आदरः वा न आसीत्। एतस्य कारणीभूतः आसीत् सचिवः मञ्जुनाथः।

'अलसाः कवयः उन्मत्ताः इव कविताः रचयन्तः केवलं दिनानि यापयन्ति' इति तस्य सचिवस्य अभिप्रायः आसीत्।

''कविजनानां पोषणं नाम निश्चयेन उन्मत्तानां कार्यम् एव। सर्वथा प्रयोजनशून्यम्! ते सर्वथा न प्रोत्साहनीयाः'' इति सचिवः तदा तदा महाराजं वदति स्म।

वस्तुतः विशाखदत्तः कविजनप्रियः। तेषां पोषणं कर्तुं तान् प्रोत्साहयितुं च सः मनसा इच्छति। 'कवीनां कृतिभिः आनन्दः जायते। बुद्धेः विकसनं भवति। ज्ञानं वर्धते' इति सः सम्यक् जानाति।

किन्तु सचिवः मञ्जुनाथः वयोवृद्धः। अनेकेषु सन्दर्भेषु समुचितसूचनाभिः साहाय्यं करोति। एतस्य वृद्धसचिवस्य वचनं तिरस्कर्तुं सः सङ्कोचम् अनुभवति स्म।

एवं हि सति कदाचित् चान्द्रायणनामकः कश्चित् कविः विशाखदत्तस्य समीपम् आगतवान्। सः युवकः, तेजस्वी च आसीत्। सः स्वीयपरिचयम् उक्त्वा- ''महाप्रभो, भवतः पितामहस्य आस्थाने यः प्रसिद्धकविः सुधाकरभट्टारकः आसीत्, तस्य पौत्रः अस्मि अहम्। पितामहवत् अहम् अपि कविताः रचयितुं समर्थः अस्मि। किञ्च अष्टावधानं शतावधानम् अपि जानामि। एतत् तु मम वैशिष्ट्यम्। भवतः आस्थाने मम विद्यां प्रदर्श्य, भवतः आश्रयं सम्पादयितुम् आगतवान् अस्मि'' इति उक्तवान्।

स्वीयपितामहस्य काले कविना सुधाकरभट्टारकेन राज्यस्य कीर्तिप्रतिष्ठादयः वर्धिताः। तादृशकवेः कुटुम्बम् इदानीं दीनावस्थायाम् अस्ति इति श्रुत्वा



विशाखदत्तः अतीव खिन्नः अभवत्। राजाश्रयः लभ्यते इति महता विश्वासेन आगत्य, राजास्थाने स्वीयविद्यां प्रदर्शयामि इति वदन्तं युवकं दृष्ट्वा सचिवः झटिति किं वा वदेत् इति राजा व्याकुलितचित्तः अभवत्।

विशाखदत्तराजः चान्द्रायणम् उद्दिश्य किमपि वक्तुं प्रवृत्तः। तदा सचिवः मञ्जुनाथः तं निवार्य, चान्द्रायणं दृष्ट्वा "किं भोः, सुधाकरभट्टाचार्यस्य महत्त्वं कीदृशम् इति वयं न जानीमः वा? वृक्षस्य महत्त्वं वर्णयित्वा तस्य फलानां विक्रयणं कुर्वन्ति खलु जनाः, एषः तु लोकस्वभावः। भवान् तु तरुणः दृढदेहवान् च अस्ति। एतादृशं व्यर्थं कवितावलम्बनं परित्यज्य, किमपि बुद्धिप्रधानम् उद्योगम् अवलम्ब्य, जीवनं यापयतु" इति उक्तवान्।

विशालदेशस्य सचिवस्य एतादृशवचनं श्रुत्वा चान्द्रायणः क्षणं यावत् स्तब्धः। किन्तु अपरक्षणे एव समाहितमनस्कः भूत्वा "उदरपोषणार्थं राजाश्रयं प्राप्तुम् अटन् अत्र आगतवान् इति तु सत्यम् एव। कविताशक्तिः तु मम विशेषयोग्यता। तया राजाश्रयः लभ्येत इति चिन्तितवान्। तथा न भवति चेत् मास्तु नाम। महाराजः कमपि भिन्नरूपम् उद्योगं प्रकल्पयति चेत् अपि अहं सन्तोषेण सिद्धः अस्मि" इति उक्तवान्।

विशाखदत्तः चान्द्रायणस्य विनयेन सन्तुष्टः भूत्वा, सचिवं मञ्जुनाथं समाश्वासयन् इव "भोः महामात्य! दीनावस्थापन्नः एषः तरुणः अस्माकम् आस्थाने आश्रयं याचमानः अस्ति। एतस्य पितामहं प्रति अस्माकं गौरवं सूचयितुं वा एतस्मै कमपि उद्योगं दातुं अस्माभिः प्रयत्नः करणीयः। कस्मिन् उद्योगे एतं नियोजयेम, वदतु" इति पृष्टवान्।

सचिवः मञ्जुनाथः क्षणकालम् आलोच्य "अस्माकम् अश्वशालायाः अश्वक्षालकः गतसप्ताहे अकस्मात् मरणं प्राप्तवान् खलु? तस्य स्थानम् इदानीम् अपि रिक्तम् अस्ति। कोऽपि आक्षेपः नास्ति चेत्, एषः तत् स्थानं प्राप्तुं शक्नोति" इति उक्तवान्।

एकस्य कवेः अवमाननं कर्तुम् अवकाशः लब्धः इति सचिवः मनसि एव सन्तोषम् अनुभवन् आसीत्।

किन्तु चान्द्रायणः किञ्चित् अपि विचलितः न अभवत्। "मानवानां परिश्रमपूर्वकं कार्यं नाम देवतार्चनसदृशम्। शरीरश्रमो वा भवतु, बुद्धेः मनसः वा श्रमः अस्तु। क्रियमाणे कार्ये उच्चनीचभावः सर्वथा नास्ति। अद्यतनपरिस्थितौ केवलं महाराजस्य सेवारूपम् उद्योगम् अहम् इच्छामि" इति सः उक्तवान्।

चान्द्रायणस्य वचनं श्रुत्वा सचिवः मञ्जुनाथः आश्चर्यचकितः अभवत्। किन्तु उत्तरक्षणे एव किमपि चिन्तयन् "प्रभो! एषः चान्द्रायणः निश्चयेन महान् चतुरः अस्ति। सत्कुले जन्म लब्ध्वा, विद्यादिसंस्कारान् प्राप्य अपि अस्माकम् अश्वशालायाम् इदानीम् अश्वानां सेवां कर्तुं सिद्धः अस्ति किल? नूनम् अत्र एतस्य कश्चन दुरुद्देशः भवेत्" इति उक्तवान्।

एतत् वचनं श्रुत्वा चान्द्रायणः आश्चर्यचकितः। विशाखदत्तः अपि आश्चर्यम् अनुभवन् प्रश्नार्थकदृष्ट्या सचिवं दृष्टवान्। महाराजस्य इङ्गितं ज्ञात्वा सचिवः तं- "भवतः राज्ये कविजनानाम् आदरः नास्ति। अतः ते अश्वशालायाः शुद्धीकरणकार्यं कुर्वन्तः जीवनं यापयन्ति इति विचारं निरूपयितुम् एषः इच्छति। एवंरूपेण अन्यदेशेषु महाराजस्य अपकीर्तिम् उत्पादयितुम् इच्छन् एषः एतम् उद्योगम् अङ्गीकृतवान्। उपरि केवलं सन्तोषस्य नटनं कुर्वन् अस्ति" इति उक्तवान्।

एतेन अतीव क्रुद्धः अपि चान्द्रायणः कष्टेन स्वीयक्रोधस्य निग्रहं कुर्वन् महाराजं "प्रभो,



भवतः आस्थाने कविरूपेण प्रवेशं प्राप्तुम् अहम् आगतवान्। अत्र तु अश्वशालायाः उद्योगः दीयते इति भवतः सचिवः एव उक्तवान् खलु? तस्य मनसि एतादृशी भावना अस्ति चेत् अहं किं करोमि? तस्य भावम् अहं न ज्ञातवान्। सः एव पुनः अर्थम् अपि उक्तवान्। अहं तु तम् उद्योगं शुभेन उद्देशेन एव अङ्गीकृतवान्" इति उक्तवान्।

"कः सः शुभोद्देशः भवतः?" इति पृष्टवान् सचिवः मञ्जुनाथः।

"विशाखदत्तमहाराजस्य राज्ये अश्वशालायाः कर्मकरः अपि उत्तमकविताः रचयितुं समर्थः अस्ति इति जनेषु प्रचारः भविष्यति चेत् महाराजस्य कीर्तिः द्विगुणिता भवति इति एव मम उद्देशः" इति उक्तवान् चान्द्रायणः।

सचिवः किमपि वक्तुम् असमर्थः भूत्वा मूकः इव तूष्णीम् उपविष्टवान्।

तदा चान्द्रायणः "कवीनां विषये महामात्यस्य किमर्थम् एतादृशः अनादरः अस्ति इति अहं न जानामि। यस्य कस्यापि देशस्य गौरवस्य कारणं न केवलं तस्य देशस्य वाणिज्यव्यवहारादिषु साधिता अभिवृद्धिः, अपि तु तस्य देशस्य कवीनां प्रतिभा अपि। शरीररक्षणार्थं यथा अन्नवस्त्रादयः आवश्यकाः, तथा मनोल्लासाय, ज्ञानस्य अभिवृद्ध्यर्थं च कविता अपि अपेक्षिता भवति। अतः एव लोके "कवित्वम् अमरं तिष्ठति" इति उक्तवान्।

तस्य वचनानि श्रुत्वा सचिवः स्मयमानः "भोः चान्द्रायण, यद्यपि भवान् न्यूनवयस्कः, तथापि मम दृष्टिदोषं परिहृतवान्। नूनं भवान् भवतः पितामहवत् प्रतिभावान् एव। अद्यप्रभृति अहं कविसम्मानस्य विरोधं न करिष्यामि" इति उक्तवान्।

सचिवे जातं परिवर्तनं दृष्ट्वा विशाखदत्तस्य महान् सन्तोषः अभवत्। सभायां उपस्थिताः सर्वे जनाः अपि प्रमोदं प्राप्तवन्तः। तदा एव महाराजः चान्द्रायणं विशेषरूपेण सत्कृत्य, तस्मै आस्थान-कविपदवीम् अनुगृहीतवान्।






तपोधनैः महामुनिभिः सह आगतः अगस्त्यः लङ्कानामकनगरस्य उत्पत्त्यादिविचारान् रामं कथयन् सुकेतोः कुमाराणां मालि-सुमालि-माल्यवतां लोकपीडां च वर्णयित्वा, अग्रिमकथां वक्तुम् आरब्धवान्।

राक्षसानां सकाशात् जाताः यातनाः सोढुम् असमर्थाः देवाः ऋषयः च सम्भूय एकस्मिन् रहस्यस्थाने पर्यालोचनं कृतवन्तः। अनन्तरं ते सर्वे महेश्वरस्य समीपं गत्वा "शम्भो! जगद्रक्षक! सुकेतोः कुमाराः ब्रह्मदेवतः वरान् सम्पाद्य गर्वातिरेकेण बहुक्रूरम् आचरन्तः सन्ति। देवताः स्वर्गात् निष्कास्य ते एव स्वर्गं स्वायत्तीकृतवन्तः। मुनीनाम् आश्रमाः, गृहाणि इत्यादिकं सर्वं नामावशेषं कुर्वन्तः सन्ति। साधुसज्जनानां कृते कुत्रापि आश्रयः एव नास्ति। ब्रह्मा, रुद्रः, विष्णुः, इन्द्रः, यमः, वरुणः, चन्द्रः, सूर्यः इत्यादयः सर्वे वयम् एव इति वदन्तः सन्ति। प्रतिक्षणं युद्धसन्नद्धानां तेषां त्रयाणां राक्षसानां, तेषाम् अनुचराणां च उपद्रवैः पीडिताः वयं भवता रक्षणीयाः। अन्यथा शरणं नास्ति, महादेव" इति भीताः प्रार्थितवन्तः।

किन्तु महेश्वरः सुकेतोः पक्षे आसीत्। अतः सः देवताः उद्दिश्य "भोः देवाः! महर्षयः! तेषां राक्षसानां प्रतापान् अहं न जानामि इति न। किन्तु अहं किं वा कुर्याम्? मया तेषां हननम् अशक्यम्। तेषां मरणं मम हस्तेन भवतु इति विधिना नैव लिखितम् अस्ति। अतः भवन्तः सर्वे विष्णोः समीपं



गच्छन्तु। सः निश्चयेन तेषां संहारं करिष्यति। इदानीं विष्णुं विना भवताम् अन्या गतिः नास्ति इत्येवं केवलं वक्तुम् अहं शक्नोमि। अन्यः मार्गः नास्ति। तत्रैव गच्छन्तु" इति उक्तवान्।

देवताः, ऋषयः च परमेश्वरं नमस्कृत्य वैकुण्ठवासिनः विष्णुमूर्तेः समीपं गतवन्तः। महाविष्णुं दीनभावेन "त्रिकूटपर्वतस्य उपरि लङ्कानगरे स्थितान् राक्षसान् हत्वा अस्मान् रक्षतु। भवन्तं विना अस्माकम् अन्यथा गतिः नास्ति। महेश्वरः अपि भवन्तम् एव शरणं गन्तुं सूचितवान्" इति उक्त्वा साष्टाङ्ग-नमस्कारं कृतवन्तः।

विष्णुमूर्तिः तेभ्यः अभयं प्रदाय "सुकेतुं तस्य त्रीन् पुत्रान् अपि अहं जानामि। तेषां व्यवहारान् अपि अवलोकयन् अस्मि। तेषां दुर्व्यवहारैः अहं क्रोधतप्तः अस्मि। तदुपरि भवन्तः सर्वे आगत्य मां प्रार्थितवन्तः खलु? इतःपरं अन्यविचारं न करोमि। मम इच्छानुसारेण कार्यं कर्तुं शिवस्य अनुमतिः अपि अस्ति इति ज्ञातम्। अवश्यं तेषां राक्षसानां संहारं करोमि। इतःपरं भयं मास्तु" इति उक्तवान्।

तानि वचनानि श्रुत्वा देवतादयः सर्वे आनन्दिताः सन्तः, विष्णोः स्तुतिं कुर्वन्तः स्वीयं स्वीयं स्थानं प्रति प्रस्थितवन्तः।

एषा वार्ता गूढचाराणां द्वारा शीघ्रम् एव लङ्कां प्राप्तवती। तां वार्तां ज्ञात्वा माल्यवान् स्वीयभ्रातरौ दृष्ट्वा "देवताः ऋषयः च सम्भूय अस्मान् मारयितुं प्रयतमानाः सन्ति वा? प्रथमतः महेश्वरस्य समीपं गत्वा दीनभावेन प्रार्थितवन्तः। महेश्वरः तत् कार्यं कर्तुम् अनिच्छन् तान् विष्णुमूर्तेः समीपं प्रेषितवान्। अतिदीनाः सन्तः ते विष्णोः पादौ गृहीत्वा याचितवन्तः। सः राक्षसानां संहारं करोमि इति तेभ्यः अभयं दत्त्वा प्रेषितवान् इति ज्ञातम्। विष्णोः कार्यान्तरं नास्ति। अतः अस्माभिः किं करणीयम् इति चिन्तनीयम्। यतः विष्णुः महान् मायावी अस्ति। हिरण्यकशिपुं नरसिंहः भूत्वा हतवान्। ये राक्षसाः अनेकवरान् सम्पाद्य दिव्यास्त्रैः युद्धं कर्तुं समर्थाः, मायाविद्यासु पारङ्गताः च आसन्, तान् अपि सः विष्णुः मारितवान्। विष्णुं विरुध्य युद्धं कृत्वा एकोऽपि राक्षसः विजयं न प्राप्तवान्। एतत् सर्वं सम्यक् स्मरन्तः वयम्

इदानीम् आलोचनां कुर्मः" इति उक्तवान्।

मालिः सुमालिः च एवंरीत्या उक्तवन्तौ-"वयं नैव अज्ञाः, वयं पण्डिताः स्मः। अनेकयज्ञान् दानधर्मादिकं च आचरामः। अस्माकं समीपं अमितम् ऐश्वर्यम् अस्ति। अत्यन्तबलिष्ठान् शत्रून् अपि सलीलं जितवन्तः। विष्णुमूर्तिः वा, रुद्रो वा, इन्द्रादयः वा अस्मान् किमपि कर्तुं न शक्नुवन्ति। सर्वे लोकाः अस्माकं विषये भीताः सन्ति। अस्माकं विषये विष्णोः किमर्थं द्वेषः स्यात्? तदर्थं किमपि कारणम् एव नास्ति। एते कर्णेजपाः देवाः एव विष्णुं निष्कारणम् उत्तेजितवन्तः स्युः। अतः वयम् इदानीम् एव सेनासहिताः गत्वा, तान् देवान् सम्यक् दण्डयेम। ते यथा सधैर्यं कुत्रापि सञ्चारं कर्तुम् अपि असमर्थाः भवेयुः तथा करवाम। यदा ते तूष्णीं तिष्ठन्ति, तदा विष्णुः अपि क्षीरसागरे तूष्णीं निद्रां करोति। तस्य समीपं कोऽपि यथा न गच्छेत् तथा करवाम" इति।

एवंरीत्या आलोचनां कृत्वा ते राक्षससहोदराः महत्या राक्षससेनया सह स्वर्गलोकं प्रति प्रस्थितवन्तः। मालिः एव तस्याः महत्याः राक्षससेनायाः नायकः आसीत्। यदा लङ्कायां स्थिताः सर्वे राक्षसाः युगपत् एव लङ्कातः निर्गताः तदा लङ्का जीर्णीभूता नगरी इव दृश्यते स्म।

राक्षसाः महद्युद्धार्थं प्रस्थितवन्तः इति वार्तां श्रुत्वा, झटिति विष्णुमूर्तिः अग्निज्वालावत् प्रकाशमानं कवचं धृत्वा



धनुर्बाण-शङ्ख-चक्र-गदा-खड्गादिकं गृहीत्वा, पीताम्बरधरः भूत्वा, गरुडवाहनेन गत्वा देवानां सेनां प्राप्तवान्। एवं भवेत् इति राक्षसाः पूर्वं नैव चिन्तितवन्तः आसन्। इदानीं प्रतिगन्तुम् अपि न शक्यते। उभयोः पक्षयोः मध्ये युद्धम् आरब्धम्।

विष्णुमूर्तिः स्वीयबाणैः, चक्रायुधेन, गदाघातेन च अनेकान् राक्षसान् हतवान्। तदा मालिः विष्णुमूर्तेः सम्मुखं स्थित्वा अतिदारुणं युद्धं कुर्वन्, विष्णोः वाहनभूतस्य गरुडस्य शिरः ताडितवान्। तदा गरुडः युद्धक्षेत्रात् प्रधावितवान्। किन्तु किञ्चित् एव विश्रम्य, चैतन्यं सम्पाद्य, पुनः युद्धक्षेत्रम् आगत्य विष्णोः समीपे स्थितवान्। तदा विष्णुः चक्रायुधेन मालेः शिरसः कर्तनं




कृतवान्।

मालेः मरणं दृष्ट्वा माल्यवान्, सुमालिः च अतीव निराशौ भूत्वा, अवशिष्टेन राक्षस-समूहेन सह लङ्कां प्रति धावितुम् आरब्ध-वन्तौ। विष्णुः तान् सर्वान् बाणैः मारयन् अनुसृत्य एव गतवान्।

एतत् दृष्ट्वा माल्यवान् "हे, विष्णो! भवान् क्षत्रियधर्मस्य अपि उल्लङ्घनं कुर्वन्, युद्धक्षेत्रात् प्रधावतः अस्मान् अनुसृत्य हननं करोति खलु? किम् एतत् उचितम्? एतादृशस्य वीरस्वर्गः अपि दुर्लभः एव। भवान् युद्धम् एव इच्छति चेत्, मया सह युद्धं करोतु। अन्येषां सर्वेषां हननं मास्तु। धैर्यम् अस्ति चेत् आगत्य मम पुरतः तिष्ठतु।" इति वदन् विष्णोः पुरतः स्थितवान्।

"वचनपालनम् एव युद्धधर्मः। भवतां हननम् अवश्यं करिष्यामि इति भवद्भिः पीडितेभ्यः देवेभ्यः वचनं दत्तवान् अस्मि। भवन्तः धावन्ति चेत् त्यजेयं वा? पातालं गच्छन्ति चेदपि, भवतः अन्विष्य मारयिष्यामि एव। भवतः एकस्य हनन-मात्रेण कथायाः समाप्तिः न भवति" इति उक्तवान् विष्णुमूर्तिः।

द्वौ अपि द्वन्द्वयुद्धं कर्तुम् आरब्धवन्तौ। माल्यवान् गरुडं विष्णुं च बहुधा पीडित-वान्। गरुडः यदा स्वीयपक्षाभ्यां झञ्झा-वातम् उत्पादितवान्, तदा तेन वायुना माल्यवान् आकाशे क्षिप्तः। तत् दृष्ट्वा सुमालिः स्वीयसेनां बहुशीघ्रं धावयन् लङ्कां प्रति धावितवान्। माल्यवान् कथञ्चित् स्वीयसेनां गृहीत्वा पराभवदुःखम् अनुभवन् लङ्कां प्राप्तवान्।

विष्णुमूर्तिः तूष्णीं न स्थितवान्। लङ्का-वासिभिः राक्षसैः सह बहुवारं युद्धं कुर्वन् अनेकान् राक्षसवीरान् हतवान्। अवशिष्टाः राक्षसाः अन्यमार्गम् अपश्यन्तः स्वीयभार्या-पुत्रैः, अनुचरैः च सह लङ्कां परित्यज्य पातालं गत्वा तेनैव स्थितवन्तः।

एवंरीत्या सर्वे राक्षसाः पाताले एव वसन्तः, सुमालिं स्वकीयम् अधिपतिं कृत-वन्तः।

सर्वे राक्षसाः यदा लङ्कातः निर्गतवन्तः तदा वैश्रवणः पुनः लङ्कां समागत्य तत्रैव वासं कर्तुम् आरब्धवान्। धनाधीशः सः

कुबेरः इति नामधेयं प्राप्तवान् आसीत्।

एवं स्थिते, एकदा सुमालिः कैकसी-नामिकया स्वीयपुत्र्या सह भूलोकम् आगत्य विहरन् आसीत्। भूमेः विशेषान् अवलोकयन्तौ तौ यदा तत्र तत्र सञ्चरन्तौ आस्तां, तदा पुष्पकम् आरूढः, स्वपितृ-दर्शनार्थं गच्छन् कुबेरः ताभ्यां दृष्टः।

तदा सुमालेः मनः व्यग्रम् अभवत्। कुबेरस्य ऐश्वर्यवैभवादिभिः सह स्वीय-दौर्भाग्यस्य तुलनां कुर्वन् "केन प्रकारेण वयं पुनः अभिवृद्धिं प्राप्तुम् शक्नुयाम?" इति आलोचयन् अन्ते एकं निर्धारं कृतवान्।

रूपेण अपरलक्ष्मीः इव वर्तमानां स्वीय-कुमारीं दृष्ट्वा सः "वत्से, भवती इदानीं विवाहयोग्या जाता। विश्रवसोः पुत्रं कुबेरं भवती इदानीं साक्षात् दृष्टवती खलु? तस्य धनवैभवम् अपि जानाति खलु? विश्रवसोः पिता पुलस्त्यब्रह्मा। महामुनेः विश्रवसोः सेवां करोति चेत्, भवती अपि एतादृशपुत्रान् जनयितुं शक्नोति। मम वचनम् अनुसृत्य कार्यं करोति खलु वत्से?" इति पृष्टवान्।

जनकस्य विषये गौरवेण कैकसी विश्रवसुः यत्र तपः आचरन् आसीत्, तत्र गतवती। यदा सा तस्य पुरतः गत्वा स्थितवती, तदा सः अग्नेः अर्चनां कुर्वन् आसीत्। पूर्णचन्द्रवत् शोभमानां कैकसीं दृष्ट्वा विश्रवसुः "भवती कस्य पुत्री? कुतः आगतवती? किं कार्यं निमित्तीकृत्य मम समीपम् आगतवती? शङ्का मास्तु, सत्यं वदतु" इति पृष्टवान्।



कैकसी अञ्जलिबद्धा भूत्वा "मुनीश्वर! भवान् स्वीयतपसः शक्त्या एव सर्वं ज्ञातुं समर्थः। अहं मम जनकस्य आज्ञाम् अनुसृत्य अत्र आगतवती। मम नाम कैकसी। भवतः सेवां एव मम सौभाग्यम् इति चिन्तयामि अहम्" इति उक्तवती।

"सत्यं, सर्वम् अवगतम्। मत्तः पुत्रान् प्राप्तुं भवती आगतवती अस्ति" इति उक्त्वा विश्रवसुः तां यथाविधि परिणीय "हे कैकसि, भवती सन्तानम् इच्छन्ती राक्षसमुहूर्ते मम समीपम् आगतवती। अतः भवती दारुणान् महाक्रूरगुणयुतान् राक्षसान् जनयिष्यति" इति उक्तवान्।

"तपोधनस्य भवतः कुमाराः तथा भवेयुः वा? तादृशान् पुत्रान् अहं न इच्छामि। कृपया



साधुगुणयुतान् कुमारान् एव अनुगृहणातु स्वामिन्" इति प्रार्थितवती कैकसी।

एवंरीत्या बहुधा प्रार्थनानन्तरं "अस्तु, भवत्याः कनिष्ठपुत्रः भवत्याः वंशानुगुणः भविष्यति" इति उक्तवान् विश्रवसुः।

किञ्चित्कालानन्तरं कैकसी एकं पुत्रं प्रसूतवती। तस्य रूपम् अतीव विकृतम् आसीत्। भयङ्कराकारः राक्षसरूपवान् आसीत् सः। दश शिरांसि। बृहदाकाराः दंष्ट्राः। कज्जलवर्णीया शरीरच्छाया। रक्ताः ओष्ठाः। विंशतिः हस्ताः। बृहन्ति मुखानि। दशमस्तकयुक्तम् एतादृशं पुत्रं दृष्ट्वा विश्रवसुः तस्य नाम दशग्रीवः (दशकण्ठयुक्तः) इति निश्चितवान्। सः एव रावणः।

रावणानन्तरं जातः कुम्भकर्णः महाबलशाली। तस्य शरीरसदृशं बृहत्शरीरं कस्यापि प्राणिनः न आसीत्। तदनन्तरं जाता शूर्पणखा विकृतमुखी आसीत्। एतेषां सर्वेषाम् अनन्तरं अन्ते जातः विभीषणः। सः सत्यवान्, न्यायशीलः, धर्मपरः, साधुगुणवान् च।

चतुर्षु अपि बाल्यतः एव परस्परभेदः दृश्यते स्म । ज्येष्ठः रावणः यद्यपि दुष्टकार्याणि बहुधा करोति, तथापि तस्य गाम्भीर्यम् अपि आसीत् । द्वितीयः कुम्भकर्णः तु महान् अलसः, शीघ्रकोपी, भोजनतत्परः च । शूर्पणखा तु स्वभावेन कुम्भकर्णम् एव अनुकरोति स्म । तस्याः अपि दुष्टचेष्टासु परपीडने च विशेषासक्तिः।

विभीषणः एव एतेभ्यः सर्वथा भिन्नः । गाम्भीर्येण व्यवहरन् सः सर्वजनप्रियः आसीत् । आकारानुगुणं स्वभावः व्यवहारः च मधुरः आसीत् तस्य । विभीषणः कदापि अग्रजैः सह दुष्टकार्येषु भागी न भवति स्म ।

रावणकुम्भकर्णौ अरण्ये एव अटन्तौ क्रमेण वर्धमानौ आस्ताम्। तौ स्वीयैः असाधारणैः बलदर्पादिभिः सम्पूर्णम् अरण्यप्रदेशं भाययन्तौ आस्ताम्। कुम्भकर्णः ऋषिजनान् बलात् गृहीत्वा खादति स्म। विभीषणः तु नियताहारः भूत्वा, नियमनिष्ठापरः सन् कालं यापयति स्म।

कदाचित् ते सर्वे यदा आश्रमे आसन्, तदा कुबेरः पुष्पकविमानारूढः पितरं द्रष्टुम् आगतवान्। कुबेरस्य तेजः ऐश्वर्यं च दृष्ट्वा कैकसी असूयापरा भूत्वा, ज्येष्ठपुत्रं रावणं

दृष्ट्वा "हे दशग्रीव, भवतः अग्रजस्य कुबेरस्य वैभवं दृष्टवान् वा? भवान् अपि तस्य जनकस्य एव पुत्रः खलु? पश्यतु, भवान् कथम् अस्ति? यथाकथञ्चित् भवान् अपि भवतः अग्रजसदृशः भविष्यति चेत्, तदा एवं मम सन्तोषः भविष्यति भोः" इति उक्तवती।

महान् क्रोधनः, बलिष्ठः च रावणः असहनीयं रोषं प्राप्तवान्। सः स्वीयां जननीम् "अम्ब, अहं मम अग्रजसदृशो वा, तदपेक्षया बलवत्तरः वा यावत् न भविष्यामि, तावत् मम तृप्तिः न भविष्यति। भवती चिन्तां त्यक्त्वा प्रतीक्षणं करोतु" इति प्रतिज्ञां कृतवान्। सः कुम्भकर्णेन सह महत्कार्याणि कर्तुं सङ्कल्पितवान्। स्वीयकार्ये विभीषणस्य अपि आङ्गीकारम् प्राप्तवान्। त्रयः अपि ते सहोदराः सम्भूय गोकर्णाश्रमं गत्वा, तत्र तपः आचरितुम् उपविष्टवन्तः। रावणः अतीव नियम-निष्ठापरः सन् तपः आरब्धवान्। कुम्भ-कर्णविभीषणौ अपि तम् अनुसृतवन्तौ।

रावणः निराहारः सन् दशसहस्रं वर्षाणि यावत् तपः तप्तवान्। प्रतिसहस्रवर्षानन्तरम् एकैकं स्वीयशिरः कर्तयित्वा अग्नये समर्पितवान्। एवंरीत्या तस्य दशमस्तकेषु नवमस्तकानि अग्नौ आहुतीभूताः। एकम् एव शिरः अवशिष्टम् आसीत्। यदा तस्य तपसः दशसहस्रं वर्षाणि समाप्तानि, तदा सः अवशिष्टं स्वीयं शिरः अपि कर्तयितुं प्रवृत्तः अभवत्। तदा दिक्पालकैः सह ब्रह्मा तस्य



पुरतः प्रत्यक्षीभूय- "भोः! दशग्रीव! भवतः तपसा सन्तुष्टः अस्मि। अपेक्षितं वरं पृच्छतु" इति उक्तवान्।

रावणः परमानन्दभरितः भूत्वा, ब्रह्माणं साष्टाङ्गं नमस्कृत्य, "भो पितामह, प्राणिनां तु मरणात् अधिकतरं भयं किमपि अन्यत् नास्ति। अतः यथा अहम् अमरः भवेयं, तथा करोतु" इति उक्तवान्।

"वत्स, तादृशवरः न शक्यते दातुम्। अतः किमपि अन्यं वरं पृच्छतु" इति उक्तवान् ब्रह्मदेवः।

"एवं तर्हि मम तु अन्यप्राणितः भयं नास्ति एव। अतः मदीयैः, नागैः, यक्षैः, दैत्यैः, दानवैः, राक्षसैः वा मम मरणं यथा न भवेत्, तथा वरेण माम् अनुगृह्णातु। मनुष्यादीनाम्

अल्पप्राणिनां बिचारे मम चिन्ता एव नास्ति। ते सर्वे तृणसमाना:'' इति उक्तवान् रावण:।

ब्रह्मा रावणस्य प्रार्थनानुरूपं वरं तस्मै दत्तवान्। तेन वरेण सह पूर्ववत् रावणस्य दश शिरांसि उत्पन्नानि। अपेक्षितस्य रूपस्य धारणशक्तिम् अपि रावणाय ब्रह्मा दत्तवान्।

अनन्तरं ब्रह्मा विभीषणस्य अपेक्षां पृष्टवान्।

''मम मन: कदापि धर्ममार्गस्य उल्लङ्घनं न कुर्यात्। तथैव यदा अहम् इच्छामि तदा ब्रह्मास्त्रस्य स्फुरणं मम भवतु'' इति वरं विभीषण: पृष्टवान्। ''तथास्तु'' इति उक्त्वा ब्रह्मा विभीषणस्य मरणं यथा न भवति तथारूपेण विशेषवरेण अपि तम् अनुगृहीतवान्।

इदानीं वरप्रार्थनाया: पर्याय: कुम्भकर्णस्य आसीत्।

तदा देवा: ब्रह्माणं ''देव, केनापि वरेण कुम्भकर्णस्य अनुग्रह: मास्तु। स: नन्दनवने विहरन्ती: सप्त देवनारी: गिलितवान्। देवेन्द्रस्य अनुचरान् दश जनान् भक्षितवान्। कति ऋषय: मुनिजना: च तेन भक्षिता: इति गणना एव नास्ति। वरप्राप्ते: पूर्वम् एव स: एवंरूप: अस्ति। वरप्राप्त्यनन्तरं कीदृश: भवेत्?'' इति उक्तवन्त:।

तदा सरस्वत्या: प्रभावेण कुम्भकर्ण: ''पितामह, वर्षावधिकां निद्रां कर्तुम् अहं यथा शक्नुयाम् तथा माम् अनुगृह्णातु'' इति पृष्टवान्। ''तथास्तु'' इति उक्त्वा ब्रह्मा अदृश्य: अभवत्। कुम्भकर्णस्य जिह्वां चालितवती, सा सरस्वती अपि तत: निर्गतवती।

सद्य: एव कुम्भकर्ण: समीचीनं ज्ञानं प्राप्य ''धिक्, हा धिक्! एतादृशवरं किमर्थम् अहं पृष्टवान्?। मम किं वा जातम्? देवा: एव किमपि वञ्चनं कृतवन्त:!'' इति बहुधा प्रलपितवान्।

एवंरीत्या रावण:, कुम्भकर्ण:, विभीषण: च ब्रह्मणा वरान् प्राप्य श्लेष्मातकनामकं वनं गत्वा तत्र वासं कर्तुम् आरब्धवन्त:।



# वरनिर्णयः

वेङ्कटाचलः मध्यमवर्गीयः गृहस्थः। तस्य विवाहयोग्या एका कन्या आसीत्।

तस्यै वरान्वेषणार्थं सः बहु प्रयत्नं करोति स्म। एतन्निमित्तम् एव सः रामपुरं रुद्रपुरं च गत्वा आगतवान्।

ततः प्रत्यागतः सः पुत्रीम् उक्तवान्-''पुत्रि! रामपुरग्रामस्थः वरः सुन्दरः एव। तस्य बान्धवाः दुष्टाः स्नेहिताः सज्जनाः इति विषयः ज्ञातः। रुद्रपुरग्रामस्थः वरः अपि सज्जनः एव। किन्तु तस्य स्नेहिताः दुष्टाः बान्धवाः सज्जनाः। एतयोः द्वयोर्मध्ये भवती कं वरम् इच्छति इति वदतु'' इति।

''रामपुरसम्बन्धः एव भवतु'' इति निश्चयस्वरेण उक्तवती पुत्री।

''किमर्थं भवती रामपुरसम्बन्धम् एव इच्छति? रुद्रपुरसम्बन्धं किमर्थं न इच्छति?'' इति पृष्टवान् वेङ्कटाचलः।

तदा मन्दहासेन उक्तवती पुत्री- ''बन्धूनां निर्णयः देवस्य हस्ते अस्ति। किन्तु स्नेहसम्पादनम् अस्मदधीनम्। स्नेहितानां दर्शनेन एव तेषां स्वभावः कीदृशः इति ज्ञातुं शक्यते। एवं किल?'' इति।





# धर्मवीरः

चन्द्रपल्लीनामके ग्रामे धर्मवीरः नाम कश्चन आसीत्। तस्य एकः अश्वशकटः अस्ति। ग्रामस्य पार्श्वे नगरम् आसीत्। ये ग्रामस्थाः कार्यनिमित्तं नगरं गच्छन्ति, तेभ्यः भाटकार्थम् अश्वशकटं ददाति धर्मवीरः। तस्य शकटसदृशः अन्यः शकटः न आसीत् इति वा, सः अधिकं भाटकं न पृच्छति इति वा कारणात् सर्वे अपि तम् आदरभावेन पश्यन्ति स्म।

कदाचित् धर्मवीरः प्रयाणिकान् नगरे अवतार्य स्वग्रामं प्रति प्रस्थितः। तस्मिन् समये धनिकः रघुनाथः तं दृष्ट्वा पृष्टवान् – "किं भोः धर्मवीर, ग्रामं प्रस्थितः वा ?" इति।

आम् इति उक्तवान् धर्मवीरः।

सन्तुष्टः रघुनाथः स्यूतं शकटे स्थापयित्वा उपविशन् उक्तवान् – "केभ्यश्चित् धनम् आगन्तव्यम् आसीत्। तस्य स्वीकरणसमये विलम्बः जातः। कुत्रापि भाटकशकटः लभ्यते वा इति निरीक्षां कुर्वन् आसम्। तावति काले अदृष्टवशात् भवान् एव लब्धः। सूर्यास्तसमयात् पूर्वं ग्रामं प्राप्तुं शक्यते" इति।

तौ प्रस्थितौ। किञ्चिद्दूरं गतम्। तावति काले गोविन्दः वेगेन आगच्छन् शकटं स्थगितवान्।

"भवान् समये लब्धः भोः। वस्तूनि स्वीकृत्य शकटनिरीक्षां कुर्वन् आसम्। भाग्यवशात् भवतः शकटः एव लब्धः" इति वदन् गोविन्दः स्यूतचतुष्टयं शकटे संस्थाप्य धनस्यूतं गृहीत्वा शकटम् आरूढवान्।

एते नगरसीमाम् अतिक्रान्तवन्तः। तावति काले पुनः द्वौ शकटम् आरूढवन्तौ।

तौ अपि चन्द्रपल्लीग्रामस्थौ एव। एकः तस्य ग्रामशालायाः शिक्षकः रामदासः। सः पूर्वतनम् ऋणं दातुं वस्त्रापणं गतवान् आसीत्

इति तस्य वचनेन ज्ञातम्। अपरः कृषीवलः राजशेखरः अतीव दरिद्रः। सः किमपि वस्तु विक्रीय गृहार्थं किञ्चित् धनं सम्पाद्य आगच्छन् आसीत्। एवम् एकैकस्य स्थितिः अपि एकैकविधा आसीत्।

चत्वारः मिलिताः इत्यतः सन्तोषकरं प्रयाणं जातम्। सूर्यास्ततः पूर्वं सर्वे ग्रामं प्राप्तवन्तः। सर्वे अपि धर्मवीराय भाटकं दत्त्वा स्ववस्तुभिः सह गृहं गतवन्तः।

परेद्युः प्रातः धर्मवीरः शकटे पश्यति-कानिचन कान्तियुक्तानि नाणकानि सन्ति! आश्चर्यचकितः सः तानि गणितवान्। आहत्य नव नाणकानि आसन्। तानि दृष्ट्वा धर्मवीरस्य चिन्ता उत्पन्ना।

धर्मवीरः धनेन दरिद्रः चेदपि गुणेन प्रामाणिकः एव। श्रमेण यत् सम्पाद्यते तावदेव पर्याप्तं मम इति चिन्तयति स्म सः। विना परिश्रमं प्राप्तं वा, अन्याय्येन प्राप्तं वा धनं सः सर्वथा न इच्छति।

एतानि नाणकानि पूर्वस्मिन् दिने शकटेन आगतेषु एकस्य स्यात्; कस्य इति ज्ञात्वा तस्मै तानि दातव्यानि इति चिन्तितवान् धर्मवीरः।

किन्तु कस्य इति कथं ज्ञायते? पृच्छामि चेत् सर्वे अपि मम एव इति वदेयुः। किं करणीयम् ? इति अपि आदिनं चिन्तितवान् सः।

"गोविन्दम् अहं सम्यक् जानामि । तस्य गृहपरिस्थितिः तु सामान्या एव । अतः तस्य समीपे सुवर्णनाणकानि, तत्रापि नव, न भवेयुः एव





अपि च भवेयुः चेदपि सः तस्य रक्षणे जागरूकः भवेत् एव । यदि तदीयं स्यात् तर्हि सः तत्क्षणे एव मम गृहम् आगमिष्यत् ।

एतत् धनं राजशेखरस्य अपि न स्यात् । यतः राजशेखरः वृत्त्या कृषिकः । इदानीं फलसमृद्धेः समयः अपि न । सः प्रतिवर्षं ऋणं स्वीकृत्य कथञ्चित् जीवनं यापयति इति अहं जानामि ।

शिक्षकस्य रामदासस्य एतत् सर्वथा न । गतमासे सः मां ऋणं पृष्टवान् आसीत् । प्राप्यमाणं वेतनं तस्य कुटुम्बपोषणार्थम् अपि पर्याप्तं न भवति । ह्यस्तन वार्तालापेन ज्ञातं यत् सः ऋणप्रत्यर्पणार्थं गतवान् आसीत् इति । एवं तर्हि सः अन्यतः ऋणं स्वीकृत्य एतत् ऋणं प्रत्यर्पितवान् स्यात् । ह्यः तस्य हस्ते एकं रूप्यकं वा आसीत् वा न वा इति सन्देहः । एवं स्थिते सुवर्णनाणकानां का कथा? बहुधा विचार्यमाणे अपि एतत् धनिकस्य रघुनाथस्य एव इति भाति । श्वः तमेव स्वयं पश्यामि" इति निर्णीतवान् धर्मवीरः ।

अनन्तरदिने धर्मवीरः तानि नाणकानि एकस्मिन् वस्त्रे बद्ध्वा धनिकस्य रघुनाथस्य गृहं गत्वा तं नमस्कृतवान्, उक्तवान् च -"भोः, मम शकटे कानिचन नाणकानि लब्धानि। तानि एकत्र बध्दवान् अस्मि। तानि प्रायशः भवतः एव स्युः। भवन्तं पृष्ट्वा अन्यान् विचारयामि इति विचिन्त्य अत्र आगतवान्" इति वदन् सः नाणकानां समूहं तस्य पुरतः स्थापितवान्।

तत् श्रुत्वा रघुनाथः अन्तः गत्वा किञ्चित् कालानन्तरं बहिः आगत्य उक्तवान् – "सत्यं भो,: एतत् धनं मम एव। संशयः एवं नास्ति। अत्र नव नाणकानि सन्ति किल ?"इति।

"आम् , नव नाणकानि सन्ति। सम्यक् गणयतु" इति उक्तवान् धर्मवीरः।

धनिकः रघुनाथः नाणकानि स्वीकुर्वन् – "परह्यः भवतः शकटस्य आरोहणसमये मम समीपे एकः धनस्यूतः आसीत्। सः स्यूतः एकत्र छिद्रः आसीत्। तत् अहं न दृष्टवान् एव। अहं भवन्तं जानामि किल ? अस्तु नाम, एतत् धनं मम एव इति कथम् ऊहितवान् ?"इति पृष्टवान्।

धर्मवीरः मन्दहासेन उक्तवान् – "ह्यः प्रातः मम शकटे एतत् धनं दृष्टवान्। पूर्वस्मिन् दिने सायं ये चत्वारः मम शकटेन

आगतवन्तः तेषु कस्यचित् एकस्य एतत् इति चिन्तितवान्। गोविन्दस्य इति वक्तुं न शक्यते। यतः सः धनविषये अतीव जागरूकतया भवति। अपि च शकटतः अवतरणपर्यन्तम् अपि सः धनस्यूतं गृहीत्वा एव उपविष्टवान् आसीत्'' इति।

''सत्यम्, एतत् अहम् अपि परिशीलितवान्'' इति उक्तवान् रघुनाथः।

''कृषीवलस्य राजशेखरस्य तु न। यतः सः गृहार्थम् इति ऋणम् आनीतवान्। गृहं गत्वा तत्क्षणमेव गणयति। यदि न्यूनम् अस्ति तर्हि धावन् मम गृहम् आगमिष्यत्। अतः तस्य अपि न इति चिन्तितवान्'' इति उक्तवान् धर्मवीरः।

''सत्यम्, भवान् सर्वान् विषयान् अपि समीचीनतया एव परिशीलितवान्'' इति उक्तवान् रघुनाथः।

''रामदासः तु धनं दातुं वस्त्रापणं गतवान्। धनं न्यूनं जातम् इति यस्य कस्यापि सकाशतः धनं स्वीकृतवान्। कथं तस्य समीपे नाणकानि भवेयुः? अवशिष्टः भवान् एव। कार्यबाहुल्यम् इत्यतः नगरतः गृहम् आगतस्य भवतः धनगणनार्थं समयः अपि स्यात् वा न वा? अतः एतानि नाणकानि भवतः एव इति चिन्तितवान्। अन्यच्च भवान् मां दृष्ट्वा पुनः अन्तः गत्वा धनस्यूतं परिशीलितवान्। नव नाणकानि वा? इति पृष्टवान् च। अतः एतत् धनं भवतः एव इति सिद्धम्'' इति उक्तवान् धर्मवीरः।

धर्मवीरस्य महतीं चिन्तनशक्तिं प्रामाणिकतां च दृष्ट्वा सन्तुष्टः रघुनाथः तानि नव नाणकानि धर्मवीराय एव यच्छन् उक्तवान् – ''मास्तु इति न वदतु। सत्पात्राय भवते प्रीतिपूर्वकं पारितोषिकम् एतत्। भवादृशाः सन्ति इति कारणतः एव लोके धर्मः जीवति। काले वृष्टिः भवति। सस्यानि युक्ते काले फलन्ति च। तत्रापि भवान् मम ग्रामीणः एव इति मम विशेषाभिमानः। यद्यपि भवता प्रामाणिकं व्यवहरता महागुणः प्रदर्शितः। तद्दृष्ट्या एतत् पारितोषिकम् अल्पम् एव। तथापि मम शक्त्यनुगुणं यच्छन् अस्मि। कृपया स्वीकरोतु'' इति।





# अदृष्टं दुरदृष्टं च

कस्मिंश्चित् ग्रामे सहोदरद्वयम् आसीत्। अदृष्टशाली ज्येष्ठः निश्चिन्ततया जीवनं यापयति। दारिद्र्यकारणात् अनुजः कष्टेन जीवति।

एकस्मिन् वर्षे अग्रजस्य क्षेत्रे फलकर्तनं समाप्तम्। इदानीं तस्य क्षेत्रे रक्षणकार्यम् अनुजस्य। सः धान्यसमूहसमीपम् उपविश्य स्वस्य दीनस्थितिं चिन्तयन् आसीत्।

तदा सः कुतश्चित् आगतां श्वेतवस्त्र-धारिणीं स्त्रियं दृष्टवान्। सा क्षेत्रेषु अटन्ती अधः पतितानि धान्यानि स्वीकृत्य पुनः सस्ये योजयति स्म।

यदा सा समीपम् आगतवती तदा अनुजः झटिति उत्थाय तस्याः हस्तं गृह्णन् पृष्टवान् "भवती का ? अत्र भवत्याः किं कार्यम्?" इति।

"अहं भवतः अग्रजस्य भाग्यदेवता अस्मि। अधः पतितानि धान्यानि बृथा नष्टानि न भवेयुः इति पुनः योजयन्ती अस्मि" इति उक्तवती सा।

"एवं वा? तर्हि मम अपि काचित् अदृष्टदेवता स्यात् किल ? सा कुत्र अस्ति ?" इति अनुजः महता उत्साहेन ताम् अदृष्ट-देवतां पृष्टवान्।

"तत्र पश्यतु, दक्षिणदिशि यः पर्वतः दृश्यते, तस्य पर्वतस्य पृष्ठभागे सा अस्ति" इति उक्त्वा सा अदृश्या अभवत्।

अदृष्टदेवताम् अन्विष्यन् गच्छामि इति विचिन्त्य गृहं गत्वा विद्यमानानि वस्तूनि एव बद्ध्वा पर्वतं प्रति प्रस्थितः अनुजः।

तदा चुल्याः पृष्ठभागतः दरिद्रदेवता उत्थाय आगतवती।

उच्चैः रोदनं कुर्वती उक्तवती सा- "मां त्यक्त्वा गच्छति वा ? भवता सह माम् अपि नयतु" इति।

"बहुदूरं गन्तव्यम्। भवती इतोऽपि

"बोहिमिया जानपदकथा"

बालिका। चलितुं न शक्नोति। अतः मास्तु'' इति बहुवारम् उक्तवान् सः। किन्तु सा एतत् न अङ्गीकृतवती।

अनन्तरम् अनुजः उक्तवान्– ''अस्तु तर्हि। भवती एतां कूपिकां प्रविशतु। मम वस्तुभिः सह भवतीम् अपि नयामि अहम्'' इति।

तत्क्षणमेव दरिद्रदेवता शरीरम् अल्पीकृत्य कूपिकां प्रविष्टवती। अनुजः कूपिकायाः आवरणं दृढं स्थापयित्वा गृहतः प्रस्थितः ।

मार्गे एकत्र पङ्कयुक्तं गर्तं दृष्टवान् सः। दरिद्रदेवतां तस्मिन् गर्ते पातयित्वा ततः विमुक्तः सः अग्रे गतवान्।

सः दक्षिणदिशि गच्छन् पर्वतान् अतिक्रम्य एकं नगरं प्राप्तवान्। तत्र कश्चन धनिकः एतस्मै उद्योगं दातुम् अङ्गीकृतवान्।

''मया एकः अन्तरट्टः कारणीयः। वेतनम् इति अहं किमपि न ददामि। खननसमये कोऽपि निधिः लभ्यते चेत् सः भवते एव'' इति उक्तवान् धनिकः।

अनुजः एतत् अङ्गीकृत्य कार्यम् आरब्धवान्। सः एकघण्टां यावत् खनितवान्। तावति काले एव तेन किञ्चित् सुवर्णं लब्धम्।

यत् लभ्यते तत् तस्य एव इति यद्यपि धनिकेन उक्तम् आसीत्, तथापि अनुजः तस्मिन् अर्धभागं यजमानाय दत्तवान्।



एवमेव अधिकम् अधिकं यदा खनितवान् तदा घटसदृशम् एकं पात्रं प्राप्तम्। तस्मिन् सुवर्णनाणकानि, सुवर्णमणयः च आसन्।

ततः कश्चन शब्दः श्रूयते स्म- ''पेटिकाम् उद्घाटयतु, पेटिकाम् उद्घाटयतु'' इति।

अनुजः तस्याः पेटिकायाः आवरणं निष्कासितवान्।

तस्मात् श्वेतवस्त्रधारिणी काचित् स्त्री आगता।

''भवती का?'' इति तां पृष्टवान् अनुजः।

''अहं भवतः अदृष्टदेवता। माम् अन्वेष्टुम् एव किल भवान् गृहतः प्रस्थितः ?

अद्य आरभ्य अहं भवन्तं भवतः परिवारं च पालयामि" इति उक्त्वा अदृश्या अभवत् सा।

अनुजः खननसमये भूमौ लब्धं निधिं यजमानाय प्रदर्श्य तस्मै अर्धभागं दत्त्वा ततः प्रस्थितः।

इदानीम् अनुजः महान् धनिकः एव सञ्जातः। किन्तु पूर्वम् अनुभूतं दारिद्र्यं विस्मर्तुम् अशक्तः सः स्वग्रामं गत्वा दरिद्रेभ्यः यथेष्टं साहाय्यम् कर्तुम् आरब्धवान्।

एकस्मिन् दिने मार्गे तौ सहोदरौ परस्परं मिलितवन्तौ । अनुजः अग्रजम् दृढम् आलिङ्ग्य, स्वगृहं नीत्वा प्रवृत्तं सर्वं निवेदितवान्। कानिचन दिनानि स्वगृहे अग्रजस्य उपचारं कृतवान्। गमनसमये तस्य पत्न्यै पुत्रेभ्यः च अमूल्यानि उपायनानि दत्त्वा प्रेषितवान् च।

अनुजस्य ऐश्वर्यं दृष्ट्वा अग्रजः असूयाम् प्राप्तवान्। 'दरिद्रदेवतां पुनः प्रेषयामि तस्य समीपम्' इति तस्य मनसि दुर्भावना उत्पन्ना।

अतः सः अनुजेन उक्तस्य गर्तस्य समीपं गत्वा अनुजेन तत्र क्षिप्तां कूपिकाम् उन्नीय तस्याः आवरणम् उद्घाटितवान्।

तत्क्षणे एव दरिद्रदेवता उपरि आगत्य अग्रजं दृढम् आलिङ्ग्य उक्तवती- "अहो, भवान् सज्जनः। उपकारं कृतवन्तं भवन्तं कदापि न त्यजामि। आजीवनं भवता सह एव भवामि" इति।

एतां पुनः तस्मिन् एव गर्ते पातयामि इति अग्रजः चिन्तितवान्। किन्तु सः तथा कर्तुं न शक्तः । तस्य सर्वे प्रयत्नाः असफलाः जाताः। मार्गे चोराः तं गृहीत्वा विद्यमानं सर्वं लुण्ठितवन्तः।

यदा सः गृहं गतवान् तदा गृहं, गृहे विद्यमानानि वस्तूनि च दग्धानि। प्रवाहेण तस्य क्षेत्रस्य फलं सर्वं नष्टं जातम्। भिक्षुकापेक्षया दीनपरिस्थितिः सञ्जाता तस्य।





# कूष्माण्डचोरः

तोरणपुरे वृषभेन्दः नाम कश्चन कृषिकः आसीत्। सः शाकपोषणे अतीव समर्थः। यद्यपि तस्य अल्पा एव भूमिः, तथापि सः तत्रैव परिश्रमेण कार्यं कृत्वा विविधानि शाकानि उत्पादयति। तानि विक्रीय प्राप्तेन धनेन तृप्त्या जीवनं यापयति च।

आत्मना वर्धितानां शाकानां विषये वृषभेन्द्रस्य महती प्रीतिः। सः वाटिकायां प्रवृद्धानि कूष्माण्डादीनि सुन्दरैः नामभिः आह्वयति। प्रीत्या तानि नामानि पुनः पुनः उच्चरन् सन्तोषम् अनुभवति च।

तस्मिन् एव ग्रामे गौरीशः नाम अन्यः कृषिकः आसीत्। तस्य वाटिका वृषभेन्द्रस्य वाटिकायाः अपेक्षया विशाला। किन्तु गौरीशः सर्वदा धनसम्पादनविषये एव चिन्तयति, न तु कृषिविषये। कृषिविषये तस्य नैपुण्यं वा विशेषरुचिः वा न आसीत् एव। वृषभेन्द्रस्य शाकानि यथा उत्तमानि तथा न भवन्ति स्म गौरीशस्य। एतद्विषये सः सर्वदा खेदम् अनुभवति। किन्तु आलस्यं त्यक्त्वा कार्यं करणीयम् इति कदापि न चिन्तयति।

एकस्मिन् वर्षे वृषभेन्द्रः समीचीनतया कूष्माण्डफलानि वर्धितवान्। तानि तावद्-बृहदाकारकाणि यत् तादृशानि केनापि इतःपूर्वं न दृष्टानि आसन्। एतानि प्रतिदिनं पश्यतः वृषभेन्द्रस्य अपि सन्तोषस्य सीमा एव नास्ति। सः प्रीत्या तानि कूष्माण्डानि 'ऐरावतम्', 'महालक्ष्मीः', 'अग्रजा', 'महाराज्ञी', 'सुवर्णा' इति अन्यान्यनामभिः आह्वयति। सामान्यतः चत्वारिंशत् कूष्माण्डानि फलितानि आसन्। इतःपूर्वं एतादृशानि कदापि न फलितानि आसन्।

नगरे सोमवासरे विशेषविक्रयणं प्रचलति। वृषभेन्द्रः भानुवासरे वाटिकां गत्वा 'विक्रयणयोग्यानि कानि' इति मनसि एव निश्चयं कृतवान्। प्रातः विपणिं गन्तुं

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

शकटनिश्चयम् अपि कृतवान्।

तद्दिने रात्रौ तस्य निद्रा एव नास्ति। 'पुत्रवत् एतानि एतावद्दिनपर्यन्तं पालितानि। यथा पुत्री पतिगृहं प्रेष्यते तथैव एतानि फलानि अपि अनिवार्यतया प्रेषणीयानि एव किल' इति सः बहुधा खेदम् अनुभूतवान्।

प्रातः वृषभेन्द्रः शकटम् आरुह्य वाटिकां गतवान्। यदा कूष्माण्डलतानां समीपं गतं तदा तस्य हृदयं स्तब्धम् इव। यतः समीचीनानि सर्वाणि फलानि केनचित् चोरितानि आसन्।

वृषभेन्द्रः मतिभ्रष्टः इव जातः। उन्मत्तः इव सः कूष्माण्डलतानां मध्ये इतस्ततः बहुकालं सञ्चारं कृतवान्। कूष्माण्डचोरं यथेष्टं निन्दितवान् च।

अत्रान्तरे वृषभेन्द्रस्य मनसि कश्चन विचारः आगतः- 'चोरितानि फलानि न द्वित्राणि, अपि तु चत्वारिंशत्। एतानि कुत्र गच्छेयुः? विपणिम् आगच्छेयुः एव। अन्यथा चौर्यस्य किं वा फलं भवेत्? तानि यत्र कुत्रापि भवेयुः नाम, अहं तेषां परिचयं प्राप्तुं शक्नोमि एव। अतः प्रथमं विपणिं प्रति गन्तव्यम्' इति।

तत्क्षणे एव ततः प्रस्थितः वृषभेन्द्रः एकघण्टाभ्यन्तरे विपणिं प्राप्तवान्। शाकापणानां पुरतः सर्वत्र सञ्चारं कृतवान् सः।

कस्मिंश्चित् आपणे सः दृष्टवान् यत् तस्य वाटिकातः चोरितानि कूष्माण्डफलानि राशीकृतानि सन्ति।



वृषभेन्द्रः आपणिकस्य पुरतः गत्वा कोपेन गर्जितवान्- "किं भो! कियद् धैर्यं भवतः? मम वाटिकातः कूष्माण्डफलानि चोरयित्वा आनीय अत्र विक्रयणं कुर्वन् अस्ति! लज्जा न भवति वा भवतः? कियद् धाष्टर्यम्! किम् एतत् उचितम्?" इति।

तदा आपणिकः आश्चर्यं प्रकटयन्- "भोः! मया चौर्यं किमपि न कृतम्। किञ्चित्कालतः पूर्वं गौरीशः दशरूप्यकेभ्यः एतानि सर्वाणि विक्रीय गतवान्" इति उक्तवान्।

"गौरीशः इतोऽपि ग्रामं न प्रतिगतवान्। समीपे एव कस्मिंश्चित् आपणे अस्ति" इति उक्तवान् कश्चित्।

वृषभेन्द्रः तत्क्षणे एव रक्षक- भटाधिकारिणः समीपं गत्वा 'गौरीशः मम वाटिकातः कूष्माण्डानि चोरयित्वा आपणिकाय विक्रीतवान्' इति निवेदितवान्।

भटाः गत्वा गौरीशं तत्र आनीतवन्तः। सर्वे सम्भूय यस्मिन् आपणे कूष्माण्डानि आसन् तत्र गतवन्तः।

"एतानि सर्वाणि भवदीयानि इति केन आधारेण वदति भवान्?" इति पृष्टवान् अधिकारी।

"मया वर्धितानि फलानि अहं न जानीयां वा? पश्यत, एषा महालक्ष्मीः। सः ऐरावतः ...." इति एकैकं नाम उच्चरन् एकैकं फलं प्रदर्शितवान् वृषभेन्द्रः।

परितः स्थिताः वृषभेन्द्रस्य मुग्धतां दृष्ट्वा हसितवन्तः।



अधिकारी अपि हसन्- "भोः! भवान् वदति - एतानि फलानि मदीयानि इति। किन्तु तथा प्रमाणीकर्तुं साक्ष्यं किमपि अस्ति वा?" इति पृष्टवान्।

वृषभेन्द्रः किमपि वक्तुं न शक्तवान्।

"एषः कश्चन मुग्धः पुरुषः। मम समीपे मया वर्धितानां फलानां शाकानां च पूर्ण विवरणम् अस्ति। विक्रीतानां गणना अपि स्थापिता अस्ति। यदि आवश्यकं, तत् पुस्तकम् इदानीम् एव आनयामि" इति उक्तवान् गौरीशः।

तदा वृषभेन्द्रः अपि उक्तवान्- "एतानि फलानि मदीयानि इति वक्तुं मम समीपे अपि साक्ष्यम् अस्ति। इदानीम् एव आनयामि तत्" इति।

तत् श्रुत्वा गौरीशः उच्चैः उपहसितवान्। अधिकारी गौरीशेन वृषभेन्द्रेण च सह एकैकं भटं प्रेषितवान्।

किञ्चित्कालानन्तरम् उभौ अपि प्रत्यागतवन्तौ। गौरीशः स्वकीयं गणनापुस्तकम् अधिकारिणः पुरतः स्थापितवान्। वृषभेन्द्रः वस्त्रेण किमपि बद्ध्वा आनीतवान् आसीत्।

गौरीशस्य पुस्तके चत्वारिंशत् कूष्माण्डानां वर्धनस्य विक्रयणस्य च विवरणम् उल्लिखितम् आसीत्।

"भवतः साक्ष्यं कुत्र?" इति वृषभेन्द्रं पृष्टवान् अधिकारी।

वृषभेन्द्रः ग्रन्थिम् उद्घाट्य कूष्माण्डानां वृन्तानि प्रदर्शयन् "एतानि एव मदीयानि साक्ष्याणि" इति वदन् एकैकं वृन्तम् अपि कूष्माण्डेन सह सम्यक् योजयन् 'एतत् ऐरावतस्य। एतत् महालक्ष्म्याः .....' इति वदन् स्थितवान्। सर्वाणि वृन्तानि फलेन सह सम्यक् युक्तानि अभवन्।

अधिकारी सर्वेषां पुरतः एव गौरीशं सम्यक् तर्जयित्वा कूष्माण्डानां मूल्यं वृषभेन्द्राय दापितवान्। तद्दिनतः आरभ्य सर्वे गौरीशं 'कूष्माण्डचोरः' इति नाम्ना आह्वातुम् आरब्धवन्तः। तेन लज्जितः गौरीशः बहूनि दिनानि यावत् ग्रामे अदृश्यरूपेण स्थितवान् आसीत्।






## सुरङ्गनिर्माणम्!

वन्यमूषकाः एकस्यां रात्रौ ७० फूट् दैर्घ्यं यावत् सुरङ्गं निर्मातुं शक्नुवन्ति।



## अति विलम्बेन पुष्यति

'पूयाराय् मोण्डी' नामकं विरललभ्यं सस्यम् अतिविलम्बेन पुष्यमाणं सस्यम् इति जगति प्रसिद्धम्। बोल्विया प्रदेशे स्थितस्य एतस्य सस्यस्य औन्नत्यं ३५ फूट्, विस्तारश्च ८ फूट्। एतत् सस्यं १५० वर्षाणाम् अनन्तरं पुष्यति, अनन्तरं मरणं प्राप्नोति च।



## उत्प्लवनसमर्थः सर्पः

एष्याप्रदेशे निवसन् उत्प्लवनसमर्थः सर्पः सकृत् उत्प्लुत्य एकमीटर्दैर्घ्यं क्रमितुं शक्नोति।

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अधीरता - | Nervousness |
| अनुरोधः - | Compulsion |
| अन्तरङ्गः - | Cellar |
| अभ्यागतः - | Uninvited guest |
| आधारभूमिः - | Basement |
| आसन्दः - | Chair |
| उपचारः - | Hospitality |
| उपधानम् - | Pillow |
| उपायनम् - | Gift |
| ओष्ठः - | Lip |
| कज्जलम् - | Eye-salve |
| कर्कटकः - | Crab |
| कर्णेजपः - | Backbiter |
| कशाप्रहारः - | Whip-lash |
| कुञ्चिका - | Key |
| कूपिका - | Bottle |
| क्रोधनः - | Furious |
| गिलितवान् - | Swallowed |
| गृध्रः - | Eagle |
| चञ्चूः - | Beak |
| चुल्ली - | Oven |
| जवनिका - | Curtain |
| तन्द्रा - | Drowsiness |
| दष्टवान् - | Bits (V) |
| धीवरः - | Fisherman |
| परिवर्तः - | Change (N) |
| पर्यालोचनम् - | Cogitation |
| पशुचारणम् - | Tending |
| प्राकारः - | Compound |
| फलकर्तनम् - | Harvest |
| फलति - | Ripens |
| मृत्तिका - | Mud |
| यमलौ - | Twins |
| युगपत् - | All of a sudden |
| रूपकम् - | A play |
| वृन्तम् - | Stalk |
| सकृत् - | Once |
| समक्षम् - | Presence |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां जनवरी-८७ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा नवम्बर-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

**'सप्टम्बर्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–**

प्रथमचित्रम् - **हासं तनोति संरम्भः।**

द्वितीयचित्रम् - **संरम्भं व्यनक्ति परिरम्भः।**

प्रेषिका – एन्. कमलम्मा, राजगुरुमन्दिरम्, कोकलुण्डा, बेल्लगुण्ठा, गञ्जाम्, ओरिस्सा-७६११९.




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

रसप्रश्नाः

# परस्परं योजयन्तु।

(अधः केचन श्लोकखण्डाः वाक्यानि वा उल्लिखिताः सन्ति। 'अ' विभागे अर्धम् अस्ति। अवशिष्टं च 'ब' विभागे। वाक्यखण्डान् परस्परं युक्तं योजयन्तु।)

| 'अ' | 'ब' |
|---|---|
| १. अर्थमनर्थं .... | १. ध्रुवं जन्म मृतस्य च। |
| २. उपायेन हि यच्छक्यं .... | २. मा गृदः कस्यस्विद् धनम्। |
| ३. क्रियासिद्धिः सत्त्वे .... | ३. कोऽर्थवान् को दरिद्रः? |
| ४. क्षीयन्ते खलु भूषणानि .... | ४. भावय नित्यम्। |
| ५. जातस्य हि ध्रुवो मृत्युः .... | ५. किं न करोति पुंसाम्। |
| ६. न कूपखननं युक्तं .... | ६. अपि न चलति। |
| ७. न दैवमिति सञ्चिन्त्य .... | ७. न तच्छक्यं पराक्रमैः। |
| ८. परिवर्तिनि संसारे .... | ८. केवलादी। |
| ९. विकारहेतौ सति विक्रियन्ते .... | ९. भवति महतां नोपकरणे। |
| १०. सत्सङ्गतिः कथय .... | १०. मृतः को वा न जायते? |
| ११. तातस्य कूपोऽयमिति ब्रुवाणाः .... | ११. प्रदीप्ते वह्निना गृहे। |
| १२. तेन त्यक्तेन भुञ्जीथाः .... | १२. येषां न चेतांसि त एव धीराः। |
| १३. केवलाघो भवति .... | १३. क्षारं जलं कापुरुषाः पिबन्ति। |
| १४. तेन विना तृणम् .... | १४. त्यजेदुद्योगमात्मनः। |
| १५. मनसि च परितुष्टे .... | १५. सततं वाग्भूषणं भूषणम्। |

उत्तराणि –

१-४. २-७. ३-९. ४-१५. ५-१. ६-११. ७-१४. ८-१०. ९-१२. १०-५. ११-१३. १२-२. १३-८. १४-६. १५-३.